# नर्मदा

(विविधविषया हास्य-व्यंग्यबहुला संस्कृतकाव्यरचना)

डॉ० प्रशस्यमित्र शास्त्री




**अक्षयवट प्रकाशन**
इलाहाबाद

भारतसर्वकारस्य राष्ट्रिय-संस्कृत-संस्थानद्वारा प्रदत्तेनाऽऽर्थिकसाहाय्येन प्रकाशितम्

नर्मदा

- लेखक

डॉ० प्रशस्यमित्र शास्त्री


- प्रथमं संस्करणम् : १९९७

- मूल्यम् : 40/-

- मुद्रक :

एकेडमी प्रेस, दारागंज, प्रयाग

फोन : ६६०९७०

- अक्षर संयोजन :

ए०एस० लेजर प्वाइण्ट

२४, ए०डी०ए० व्यवसायिक केन्द्र

कटरा, प्रयाग

फोन : ६०५७६५, ६१२०३६

# NARMADA

## SELECTIONS OF SOME SANSKRIT SATIRES

**Author**

Dr. Prashasya Mitra Shastri

Reader - Feroze Gandhi College, Rae Bareli



**Akshayavata Prakashan**

**Allahabad**

Published with the Financial Assistance from the
RASHTRIYA SANSKRIT SANSTHAN, NEW DELHI


NARMADA

Author :

Dr. Prashasya Mitra Shastri

First Edition : 1997

Price : 40/-

Published By :

AKSHAYAVATA PRAKASHAN
26, Balarampur House, Allahabad

Printed By :

ACADEMY PRESS
Daraganj, Allahabad. Ph. : 660970

Laser Printing :

A. S. LASER POINT
Allahabad. Ph. : 605765, 612036

# पुरोवाकं प्रशास्महे

यद्यप्यष्टसु नवसु वा रसेषु हास्यमप्येको रसस्तथाऽप्यस्य निरूपणं पुरातने संस्कृतवाङ्मये न प्राचुर्येण दृष्टिपथमवतरति। संस्कृतरूपकेषु प्रायशोऽस्य निरूपणं विदूषकमाध्यमेन परिदृश्यते। विदूषकश्च विकृताङ्गवचोवेषैर्हास्यकार्यभविष्यन्नाम पुरा युगे परमद्यतनानां जनानां कृते ते विकृता अङ्गवचोवेषा वैरस्यमेव जनयेयुर्नाम। तद्धि नाम हास्यमुत्तमं यत्र तत्कृते न स्यात् प्रयत्नः कश्चित्परिलक्ष्यः। स्वभावत एव यदि तत्परिस्फुरति तदेव प्रशस्यकोटिं भजते। विदूषकस्य हास्यकारित्व एवं विनियोगः। तेन यथा कथञ्चिद्धास्यं जनयितव्यमेव। न तत्र किञ्चित् स्वाभाविकं वा सहजं वा। श्रोतॄणां द्रष्टॄणां वा ततस्तादृश्येव व्यपेक्षा। यतस्तेन हास्यं जनयितव्यमेवाऽतस्तत्र तज्जनितः प्रयत्नोऽपि न तिरोहितः प्रेक्षावताम्।

अद्यत्वे वाङ्मयान्तरेषु हास्यस्य व्यङ्ग्योक्तिनर्मोक्त्याक्षेपोक्त्यादीनि पैरोडी-सैटायर-विट-आदीनि आङ्ग्लशब्दैरभिव्यज्यमानानि रूपाणि दृग्गोचरतां यान्ति यानि गूढार्थप्रतिपादकत्वेन चर्व्यमाणानि भृशं स्वदन्ते सुधीभ्यः। तदेव मनसि कृत्वा कतिपयैः संस्कृतकविभिर्विविधरूपहास्यनिरूपकाः काव्यग्रन्था निर्मिताः। एतादृशेषु ग्रन्थेषु श्रीगुरुदयालुशर्मणां काव्यामृतधारा, डॉ० भागीरथप्रसादत्रिपाठिनां वागीशशास्त्रिणां नर्मसप्तशती, अर्जुन नाडेकराणां कण्टकार्जुनश्च क्रमशः पैरोडी-विट-सैटायररूप-हास्यप्रतिपादकत्वेन विशेषोल्लेखमर्हन्ति।

हास्यलेखकेषु साम्प्रतं डॉ० प्रशस्यमित्रशास्त्रिणो विशिष्टं स्थानं बिभ्रति। तेषां नैका व्यङ्ग्यकविताः काले काले संस्कृत-पत्र-पत्रिकासु

प्रकाशिताः। अद्यतने समाजे यद् वैषम्यं परिलक्ष्यते यदनौचित्यं वा निभाल्यते तद्विषये कटुप्रहारास्तै र्विहिताः। हास्यमाध्यमेन तैर्निपुणमधिक्षिप्तोऽद्यतनः कपटपटीयान् जिह्वाग्रे मधु हृदि च हालाहलं विषं स्थापयन् समाजः। एतेषां काव्ये सर्वं सहजं स्वाभाविकं च। नास्ति तत्र कृत्रिमताया लेशोऽपि। सर्वं वर्णनं यथार्थमेव। एतद्यथार्थवर्णनमेव यत् स्मेराननान् विदधाति सर्वान्। स्वभावोक्तिर्यदा भङ्गीभणितिमाश्रयति तदा सहृदयहृदयान्यावर्जयति। न नर्मयुक्तं वचनं हिनस्तीति तन्न तुदति। एतदेव कविकौशलमिति विज्ञाः। यथार्थं प्रतिपादयितुं कदाचिद् विपरीतलक्षणामप्याश्रयन्ति कविवर्याः। हास्यजनिका सा विपरीतलक्षणा गूढं हृदये प्रविशति समुद्वेल्लयति च सहृदयानां मनांसि। नर्मदेति कृतिर्नर्मदावत्कल्लोलबहुलां नानारसालङ्कारविभूषिता गजानामङ्गे रचिता भक्तिरिव हठादाकर्षिका नर्मदातृत्वेन यथार्थाऽभिधाना लोकेनाऽभिनन्दिष्यत इति दृढं प्रत्येमि,

१९९७ जून मासस्य
प्रथमदिवसः

सुरभारतीरसिकोऽहम्—
सत्यव्रतः शास्त्री
(पूर्वसंस्कृत-विभागाध्यक्षः दिल्लीविश्वविद्यालये;
पूर्वकुलपतिः पुरीस्थित-संस्कृतविश्वविद्यालये च)

# काव्यशास्त्रविनोदेन....

आसृष्टेरधुनावधि सानन्तरूपं विजृम्भमाणं काव्यं न कदापि विराममधिगच्छतीति निर्विवादं सत्यमेतत् सर्वैः प्रतिपत्तव्यम्। "पश्य देवस्य काव्यं न ममार न जीर्यति" इत्युक्त्या सुधीभिरभियुक्तैः पूर्वोक्तं प्रमाणितम्। उक्तञ्च ध्वनिप्रतिष्ठापनपरमाचार्येण श्रीमदानन्दवर्धनेनापि — "न काव्यार्थविरामोऽस्ति यदि स्यात् प्रतिभागुणः"। तच्च काव्यं पूर्वाचार्यैः नैकलक्षणोपेतमपि काव्यत्व-वैशिष्ट्येन सर्वैः सहृदयैः सन्ततमास्वाद्यते। एकस्मिन् लक्ष्ये सत्स्वपि बहुषु लक्षणेषु लक्ष्यतावच्छेदकं न कदाचित् व्यभिचरति, तदाक्रान्तं यत्किमपि लक्षणं काव्यं लक्षयितुं क्षमते।

काव्यञ्च तादृशं कमनीयं वस्त्वलङ्काररसादिभेद-प्राधान्येन नानाविधं क्वचिच्च वाच्यार्थ-लक्ष्यार्थ-व्यङ्ग्यार्थ-वैशद्येन तद्विद्योतते। तत्र सचेतसां चेतश्चमत्कारकारिव्यंग्यार्थप्रधानमेव काव्यमित्यत्र नास्ति कस्यापि मनागपि संशीतिलेशः।

योऽर्थः सहृदयैः श्लाघ्यः सर्वात्मना कविकाव्यजगति स्पृहणीयतां भजते सोऽस्ति निरतिशयलोकोत्तरचमत्कृति-जनको व्यङ्ग्यार्थो नाम। स च व्यङ्ग्योऽप्यर्थः वस्त्वलंकाररसाद्यात्मना त्रिविधः परिकल्पितः, स च रसादिव्यंग्यार्थ-विशिष्टं काव्यं रसात्मकसौष्ठवसंवलितं सहृदयलोके सुभृशमभिप्रेतम्। तत्रापि लोकसामान्यमनोरञ्जकत्वेन नूनं हास्यरसप्रधानव्यंग्यार्थवैशिष्ट्येन संश्लिष्टं काव्यं लोकानां झटिति समावर्जनाय प्रभवतीति वक्तुं न प्रमाणान्तरमपेक्ष्यते, स्वतः प्रामाण्येन तस्याबालयुववृद्धं समेषामनुभूतिविषयीकृतत्वात्। एतादृशं स्फुटहास्यव्यञ्जकं काव्यं

बाहुल्येन संस्कृतसाहित्ये नोपलभ्यते। गभीरसूक्ष्मतरहास्यरसपूर्णं

साहित्यं संस्कृतवाङ्मये यत्र तत्र शास्त्रदर्शनादिग्रन्थेषु विद्यमानं सत् परिपक्वधियां सुधियां बुद्धिविलासायैवोपयुज्यते न तु सुकुमारतीनां हृदयावर्जनाय।

अस्यां दिशि प्रयतमानेषु रचनाकृत्सु विरलान्येवांऽगुलीगण्यानि नामानि श्रूयन्ते। अतश्च तत्र हास्यरचनाप्रधान-काव्यकर्मणि ये केऽपि पदं निदधतो दृश्यन्ते तेष्वेष प्रशस्यमानाभिधानो डॉ० प्रशस्यमित्रः प्राशस्त्यं प्राप्नोति साम्प्रतिके साहित्यकृतां समाजे।

सभङ्गीभणितिर्वक्रोक्तिर्हास्यरसस्य जीवातुः, तां विना हास्यं न प्रसृतिमुपैति। यद्यपि आचार्यकुन्तकेन वक्रोक्तेः काव्यात्मत्वं मन्वानेन तद्वैशिष्ट्यमनितरसाधारणं प्रत्यपादि, तथापि काव्यालंकारकर्त्रा आलंकारिकमूर्धन्येन आद्याचार्येण भामहेन तस्याः काव्ये सार्वत्रिकत्वं प्रादर्शि, यथा —

सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना।।

इत्युक्त्या निश्चप्रचमिदं विभावयितुं शक्यते यद् वक्रोक्तिमन्तरा न कश्चिदलंकारश्चमत्कारपदमारोहति।

इदं विशेषेणाऽवधातव्यं यद् भामहाद्यैराचार्यैर्लंकारस्यैव काव्यप्राणता प्राण्यगादि। सैव वक्रोक्तिर्व्यङ्ग्योक्तिरित्युक्तौ नात्युक्तिः। व्यंग्योक्तिमादायैव कश्चिद् व्यङ्ग्यकारो व्यंग्यप्रधान-काव्यनिर्माणौपयिकशक्तिशालितया सहृदयलोकश्लाघनीयं यशो विन्दति। तादृशवक्रोक्तिलक्षणवचो भङ्गाभणिति-प्रणीता रचना कं न प्रीणातीति मनसि निधाय विधाय च तादृशोपस्कारकसामग्रीसंघटनं निर्माति कश्चित् कवयिता समधुरसुधाहास्याम्बुकणनिर्झरिणीं काव्यसरणिम्।

किञ्च हास्यकाव्यप्रणयनशेमुषीकेण कविमित्रेण डॉ० प्रशस्यमित्रेण प्रशस्यहास्यमर्मकर्मणि नक्तंदिवं व्यापृतेन न केवलं छन्दोबन्धानुबन्धिहास्यव्यंग्याविसंष्ठुलं सुमधुरतरं काव्यामृतं निष्ठ्यूतं प्रत्युत निरवद्यहृद्यगद्य-संविधानक-पाटवमपि प्राकाटीति नूनमस्य सातिशयपूर्णा कवित्वनैपुणीति बोद्धुं सुतरां शक्यते केनापि तत्काव्यनिकुञ्जसंचारपटीयसा काव्यतत्त्वजुषा विदुषा।

नानाविधा राष्ट्रिय-सामाजिक-राजनीतिकवैयक्तिकवैश्विक समस्या-सन्दर्भिताः तदीया रचनाचातुरी साम्प्रतिके संस्कृत-काव्यनव्यविधाविधाने ध्रुवमेव वैचित्र्यचारूताकाष्ठामधितिष्ठतीति निर्विचिकित्सं निर्वक्तुं युज्यते। गद्य-पद्यात्मकोभय-विधकाव्यग्रन्थनसाधारण्यं न साधारणकवयितृ-कवित्वबुद्धिसाध्यम्। तत्र नूनमसाधारणप्रातिभवैशिष्ट्यप्रणेतृत्वमपेक्ष्यते। अथापि तत्रापि ''गद्यं कवीनां निकषं वदन्ती'' त्याभाणकप्रामाण्यप्रमीयमाण-गद्यकाव्यनिर्माणनैपुण्यं बिभ्रता श्रीमता डा० प्रशस्यमित्रशास्त्रिणा तदुभयात्मक-हास्यव्यंग्यव्यज्यमानानुपमानकाव्यविधानपथप्रथम ानं स्वीययशोवितानमतानीति तस्मै मदभिन्नात्मने भूयोभूयो सहार्दसौहार्दं साधुवादप्रदानं विदधन्नहं नितरां कामये यदेष विशेषकाव्यप्रातिभवैभवेन समुदीयमानः सर्वासु हास्यरसप्रधानकाव्यविधासु सरससरसं काव्यप्रणयनं विदधानो मानोन्नतिं स्वानुकूलकवित्वप्रतिष्ठास्पदञ्च समाप्नुयादिति परमात्मानमभ्यर्थयमानो विविक्तविस्तरेण विरमामि।

रामनवमी
१६ अप्रैल १९९७ ई०

**पं० शिवजी उपाध्यायः**
अध्यक्षः साहित्य विभागे
सम्पूर्णानन्द संस्कृत विश्वविद्यालयः
वाराणसी

# मदीयमपि यत्किञ्चित्

संस्कृतभाषायां हास्यरससम्पन्नानि काव्यानि प्रायशोऽल्पीयांस्येव दृष्टिपथमायान्ति। प्राचीनेषु काव्येषु कानिचित् पद्यानि मन्ये हास्यरसविभूषितानि भवेयुः परन्तु सम्पूर्णमेव काव्यं केवलं हास्यरसेनैव निबद्धं भवेद् व्यंग्यात्मकभावैर्वा विभूषितं भवेद् इति तु प्रायः सुदुर्लभम् एव। यद्यपि विभिन्नेषु प्राचीनेषु नाटकेषु सट्टकेषु च हास्यरसः क्वचित् नितरामामोदभरः प्रमोददायकश्च वर्त्तते परन्तु तेषां वर्णनविषयस्तु सामान्यजनाऽपेक्षया केवलं धीरोदात्तं राजानं नायकम् अतिशयसुन्दरीं नायिकाम् अथवा राज्ञो मित्रं विदूषकमेवाऽवलम्ब्य प्रकटीभवति।

सम्प्रति तथाविधां प्राचीनशास्त्रीयपद्धतिमपास्य कैश्चित् सामान्यजनमप्यवलम्ब्य तं च नायकत्वे प्रतिष्ठाप्य काव्यं नाटकं गद्यं च लिख्यते परन्तु संस्कृतसाहित्ये तथाविधस्य लेखनस्याऽत्यन्तं न्यूनत्वमेव वर्त्तते। हास्यं तु तत्राऽप्यल्पतमम्। तत्सर्वमालक्ष्यैव मया साम्प्रतं संस्कृतसाहित्यस्य भाण्डागारं हास्य-व्यंग्यरसस्य रचनाविन्यासैः पूरयितुं कश्चित् प्रयत्नः प्रारब्धः।

विगतेषु वर्षेषु पुस्तकत्रयमस्माकं हास्यरसमनुश्रित्य व्यंग्यभावं च पुरस्कृत्य पाठकानां पुरतः प्रकाशितमभवत्। तत्र प्रथमं पुस्तकं ''हासविलास'' इति नामधेयेन पद्यकाव्यात्मकमभूत् तथा च तत्पुस्तकम् उत्तर प्रदेशीय-संस्कृत-अकादमी द्वारा तदानीं विशिष्टेन पुरस्कारेण पुरस्कृतमप्यभवत्। द्वितीयं च पुस्तकं ''व्यंग्यविलास' इति नामधेयेन राष्ट्रिय-संस्कृत-संस्थानस्याऽऽर्थिकसाहाय्येन

नानाविधरेखाचित्रैर्विभूषितं सद् गद्यरूपात्मकं प्रकाशितमासीद् यस्मिन् लघु-संस्कृत-कथामाध्यमेन साम्प्रतिकस्य लोकजीवनस्य विविधपक्षाणां हास्यरस-माध्यमेन रुचिकरं वर्णनं प्रस्तुतमभवत्।

एतस्यामेव परम्परायां मदीयं तृतीयं पुस्तकं च ''कोमलकण्टकावलिः' इति नामधेयेन प्रकाशितम्। पुस्तकमेतत्पद्यात्मकमभूत्। कालाऽनन्तरमेतस्य हिन्दी-पद्याऽनुवादोऽपि उत्तर प्रदेशीय संस्कृताकादम्याः सहयोगेन प्रकाशितः। पद्यानुवादश्चाऽस्य हिन्दी संस्थान उ०प्र० द्वारा १९९२ तमे ख्रीष्टाब्दे पञ्चसहस्ररूप्यकैः पुरस्कृतः।

तदनन्तरमहं हास्य-व्यंग्यरचनापद्धतिं परित्यज्य संस्कृतकथारचनायां व्यापृतोऽभूवम्। तत्र व्यापृतत्वादेव च हास्यव्यंग्यरचनाविधिरुपेक्षितः सञ्जातः। परन्तु एतन्मध्ये मम ''अनाघ्रातं पुष्पम्'' इति नामधेयेन सामाजिक-मनोवैज्ञानिक-पृष्ठभूमिमवलम्ब्य द्वादशकथानामेकं संकलनं १९९४ ख्रीष्टाऽब्दे प्रकाशितं सञ्जातम्। कथाकदम्बकमेतत् विद्वद्भिः पर्याप्तममभिनन्दितम् अथ च दिल्लीस्थ-संस्कृत-अकादमीद्वारा १९९६-९७ वर्षीये मौलिक-संस्कृत-रचना-पुरस्कारप्रसङ्गे सप्तसहस्ररूप्याणां प्रथमपुरस्कारेण सभाजितम्। तदनन्तरं च पुनरप्यहं हास्य-व्यंग्यरचनाकर्मणि व्यापृतोऽभूवम्। तस्मादेव साम्प्रतमस्माकं चतुर्थमिदं पुस्तकं हास्यरससमन्वितं ''नर्मदा'' इति नामधेयेन पाठकानां पुरतः प्रस्तुतं भवति।

संस्कृतभाषायां नर्म-शब्दः सरसोक्तीनां परिहासपूर्णानां वा कथानां वाचको वर्त्तते। प्राचीनकाले राज्ञां धनिकानां वा स्व-विनोदकारकैः परिहासप्रियै र्वचनैश्चित्तस्याऽऽह्लादनं कुर्वाणाः परिहास-प्रिया वयस्या पुरुषा नर्मसचिव-शब्देन परिलक्षिता भवन्ति

स्म। अत एव मर्मामिश्रितवचनानाम् उपस्थापकत्वात् काव्यकेलिप्रदायकत्वाद् वा एतस्या काव्यरचनाया नामकरणमस्माभिः "नर्मदा" इति कृतम्।

पुस्तकमेतत् त्रिषु परिच्छेदेषु विभक्तं वर्त्तते। तत्र प्रथमे परिच्छेदे अनुष्टुप्छन्दसोपनिबद्धानां प्रायः पञ्चाशदधिकैक शत-हास्य-व्यंग्य-भावानां समुपस्थापनं दश-संख्याकेषु वर्गेषु विभज्य प्रस्तुतं वर्त्तते। तत्र व्यंग्यानां माध्यमेन क्वचित् पति-पत्न्योः प्रेमि-प्रेमिकयोः पिता-पुत्रयोः गुरु-शिष्ययोः पुलिसाऽपराधिनो र्वा मध्ये सम्पद्यमानाः पारस्परिका हृदयावर्जका वार्त्तालापाः, क्वचित् प्राचीननीति-वाक्यानामभिनवरूपेणोपस्थापन-पुरःसरं सामाजिक-राजनैतिक-व्यवस्थायां प्रहाराः, क्वचिच्च विशुद्धमनोरञ्जनमात्रप्रदाः पारस्परिका वार्त्तालापपटुताः संवादनिपुणता वा प्रकटीकृता वर्त्तन्ते।

द्वितीये परिच्छेदे विद्यमाना दीर्घकायास्तथाविधाः कविताः संगृहीता याः प्रायशो देशस्य विभिन्नेषु भागेषु समायोजितेषु संस्कृत-कविसम्मेलनेषु यथाऽवसरं श्रोतॄणां समक्षं मया समुपस्थापिताः। एतासु व्यंग्यकवितासु देशस्य साम्प्रतिकाः परिस्थितयस्तद्यथा - महार्घता, भ्रष्टाचरणजन्या पीडा, निर्वाचनदुर्व्यवस्था, सञ्चारमाध्यमानां कुप्रभावः, भ्रातृ-भ्रातृव्यवादः, निर्धनानां शोषणम्, राजनेतॄणां कदाचरणम् प्रभृतयो विषयाः सहजतया प्रस्तुताः। सरलया संस्कृतगिरा समुपस्थापिता एताः काव्य-रचना यथा कविसम्मेलनेषु श्रोतॄणां हृदयान्याह्लादयन्ति तथैवाऽत्र पाठकानामपि मनोरञ्जनं कुर्वाणाः संस्कृतरचनाकाराः देशस्य सामयिकसमस्याः प्रति नैव कथमप्युदासीनाः सन्तीत्यपि परिचाययन्ति।

तृतीये परिच्छेदे सप्तदशकवितानां गीतानां वा संकलनमुपन्यस्तं वर्त्तते। अत्रस्थासु रचनासु हास्यरसस्य सर्वथाऽभावः प्राप्स्यते। परन्तु व्यंग्याऽनुभूतिस्तु बहुत्राऽवश्यम् उपलप्स्यते। अत्र संकलिता अनेकाः कविताः कदाचिदाकाशवाणीद्वारा दूरदर्शनकेन्द्रद्वारा वा प्रसारिताः संस्कृत-पत्र-पत्रिकासु च यथावसरं प्रकाशिता अपि वर्त्तन्ते। आसु कवितासु संस्कृतभाषाया महत्त्वम्, देशस्यैकत्वम्, मातृभूमेर्महत्त्वम्, पर्यावरणस्य सुरक्षाचिन्तनम्, जीवनसौन्दर्यस्य चर्चाः प्रभृतयः विभिन्ना विषयाः समाहिता वर्त्तन्ते।

अस्मिन्नेव परिच्छेदे मम तथाविधानि कानिचित् पूर्वविरचितानि गीतान्यपि संकलितानि वर्त्तन्ते यानि प्रायः संस्कृतछात्रैश्छात्राभिश्च प्राचीनचलचित्रगीतध्वन्यनुसारं गीयन्ते स्म। मन्ये तानि गीतान्यपि संस्कृतगीतगायकानां मनोविनोदं कर्त्तुं किमपि प्रभविष्यन्ति।

पुस्तकेऽस्मिन् बहुत्र संशोधने परिवर्त्तने परिवर्धने सद्यः प्रकाशने च 'पारिजातम्' इत्याख्यस्य संस्कृतमासिकपत्रस्य सम्पादकेन श्री डॉ० प्रकाशमित्रशास्त्रिणा तथा च सम्पूर्णानन्दसंस्कृतविश्वविद्यालये न्याय-वैशेषिक विभागे वरिष्ठप्राध्यापकपदमलङ्कुर्वता सुहृद्वरेण डॉ० सर्वेश्वर राजहंस-महोदयेन यः सहयोगः प्रेरणा च यथावसरं प्रदत्ता तदर्थमहमुभाभ्यामपि विद्वन्मित्राभ्यां धन्यवादं कृतज्ञतां च व्याहरामि।

पुस्तकस्याऽस्य मुद्रणे प्रकाशने च राष्ट्रिय-संस्कृत-संस्थान-दिल्ली द्वारा प्रदत्तमार्थिकं साहाय्यं मादृशानामकिञ्चनसंस्कृतसेवकानां कृते वरदानसदृशमिति मन्यमानोऽहं संस्थानस्य सर्वाधिकारिभ्यो भूयो भूयो धन्यवादं विज्ञापयामि।

तथैव अक्षयवट प्रकाशन संस्थायाः संचालकं सुहृद्वरं श्री सत्यव्रतमिश्रं साधुवादं विज्ञापयामि यत्तेषां प्रबन्धव्यवस्थया

पुस्तकमेतत् यथाशीघ्रं प्राकाश्यमधिगतम्।

मुद्रणकार्ये च प्रयागस्थ-अकादमी प्रेस प्रबन्धकाः श्री सुरेन्द्रमणि-त्रिपाठिमहोदयास्तथैव लेजर-प्वाइन्ट इत्याख्यस्य कम्प्यूटर-कम्पोजिंग केन्द्रस्याधिकारिणः श्री आशुतोष मिश्र, आचार्य श्रीशैलेषमहोदया अपि धन्यवादस्य पात्राणि वर्तन्ते येषामात्मीय-सहयोगसम्भवादेव पुस्तकमिदं मनोवाञ्छितरूपेण सुरुचिरं मुद्रणतामधिगतम्।

यदि संस्कृतकाव्यप्रेमिभ्यः पुस्तकमेतत् किमपि मनोरञ्जनं सौख्यं च प्रदास्यति तदाऽहं स्वकीयं परिश्रमं सार्थकं मन्यमानः पुनरेव सोत्साहं देवभाषासमाराधने निरतो भविष्यामीति सप्रश्रयं निवेदयति —

बुद्ध-पूर्णिमा
२२ मई १९९७ ई०

**प्रशस्यमित्रः शास्त्री**
बी-२६ आनन्द नगर (जेल रोड)
रायबरेली - २२९००१
फोन - ८८४६४१

# विषयानुक्रमः

## तृतीयः परिच्छेदः





काव्यं व्यंग्यसमन्वितं ह्यनधिकं संलक्ष्य हास्याऽन्वितम्,
संसक्तः स्वयमेव तत्प्रणयने गीर्वाणवाक्सेवया।
विद्वांसो हि निपीय शान्तमनसा काव्यामृतं नर्मदम्,
चिन्तावैतरणीमपास्य कतिचित् कालं लभन्तां सुखम्॥

प्रथमेऽस्मिन् परिच्छेदेऽनुष्टुप्-छन्दसोपनिबद्धानां प्रायः पञ्चाशदधिकैकशत-हास्य-व्यंग्यभावानां समुपस्थानं दशसंख्याकेषु वर्गेषु विभज्य प्रस्तुतं वर्त्तते।

तत्र व्यंग्यानां माध्यमेन क्वचित् पतिपत्न्योः, प्रेमिप्रेमिकयोर्मध्ये वा सम्पद्यमानाः पारस्परिका हृदयावर्जका वार्त्तालापाः, क्वचित् प्राचीननीतिवाक्यानाम् अभिनवरूपेणोपस्थापनपुरःसरं सामाजिक-राजनीतिक-व्यवस्थायां प्रहाराः, क्वचिच्च विशुद्धमनोरञ्जनमात्रप्रदाः पारस्परिका वार्त्तालापपटुताः संवादनिपुणता वा प्रस्तुताः॥

# दाम्पत्य-विषयकाणि व्यंग्यानि

## तदा सप्तपदीकृत्ये

पत्नीम् आक्रुश्यमाणस्तु कलहे पतिरेकदा।
प्रावोचद् यद् यद्रा ब्रह्मा बुद्धिं दातुं समुत्सुकः।।

सर्वेषां प्राणिनां तत्र चाऽऽह्वानमकरोद् यदा।
तदा तं समयं पुण्यं त्यक्त्वा त्वं प्रस्थिता कुतः?।।

पत्युस्तद्वचनं श्रुत्वा पत्नी संक्षुब्धमानसा।
पतिमाग्नेयनेत्राभ्यां पश्यन्ती प्रत्युवाच यत्।।

यत्काले भगवान् व्यस्तो बुद्धेर्वितरणे स्वयम्।
तदा सप्तपदीकृत्ये निमग्नाऽहं त्वया समम्।।

## बद्धमत्स्य इव स्थितिः

वार्त्तालापप्रसंगेऽथ पत्नी पतिमुवाच यत्।
उपहारान् विवाहात्तु पूर्वं मह्यं निरन्तरम्।।

नानाविधान् ददासि स्म साम्प्रतं किन्तु हे पते!।
न तथा कुरुषे तत्र ज्ञातुमिच्छामि कारणम्।।

पत्न्यास्तत्प्रश्नमाकर्ण्य पतिस्तं सस्मिताननः।
मन्दं विहस्य प्रत्यूचे पत्नीमेवमिदं वचः।।

जालबद्धगते मत्स्ये किं तस्मै पुनरप्यहो!।
त्वमेव ब्रूहि को मूर्खो भोजनानि प्रयच्छति?।।

## पत्न्यो न रुचिराः कथम्?

यदा सर्वाः कुमार्यस्तु प्रतीयन्ते मनोरमाः।
तदा कुत इमाः पत्न्य आयान्त्यरुचिरा गृहे?।।

## दुःखं मे चिन्तनं मृषा

एकदा कलहे पत्नीम्पतिरेवम् उवाच यत्।
सत्त्विकीं त्वां तु मन्ये स्म साध्वीं बुद्धिमतीं तथा।।

तस्य वाचं समाकर्ण्य पत्नी तम्प्रत्युवाच यत्।
त्वामहं चाऽपि मन्ये स्म सज्जनं सात्त्विकं नरम्।।

पत्न्यास्तद्वचनं श्रुत्वा पतिरूचे पुनस्तदा।
तवैव चिन्तनं सत्यम् अनुमानं वृथा मम।।

## दाम्पत्यं नरकात्मकम्

प्रच्छन्नाः प्रहरिभ्यस्तु मानवा नरकस्थिताः।
स्वर्गक्षेत्रे प्रवेक्ष्यन्तः निगृहीताः यदाऽभवन्॥

परन्तु देवदत्तोऽयं स्वर्गं त्यक्त्वा यदैकदा।
नरके प्रविविक्षुः स द्वाःस्थितै र्निग्रहं गतः॥

प्रतिहारस्तदा कश्चित् पृष्टवान् यत् कथं त्वया।
स्वर्गस्थं सुखसौविध्यं त्यक्त्वा नरक इष्यते?॥

तस्य तद्वचनं श्रुत्वा देवदत्तो जगाद यत्।
श्रूयते गम भार्याया देहान्तः समजायत॥

## कस्य कष्टं महत्तरम्?

एकदा यज्ञदत्तस्तु दुःखितश्चिन्तितस्तथा।
सखायं देवदत्तं स एवं वचनमाह यत्॥

स्वपूर्वपतिसन्दर्भे मम पत्नी सदा सखे!।
चर्चां प्रकुरुते नित्यम् इति दुःखं महन्मम॥

यज्ञदत्तवचः श्रुत्वा देवदत्तोऽपि दुःखितः।
स्वकष्टविषये तावद् यज्ञदत्तमुवाच यत्॥

पत्न्यास्ते वचनं सह्यं परं भार्या तु मे सदा।
भाविनम्पतिमाश्रित्य चर्चां प्रकुरुते सखे!॥

## मम स्वप्ने तु तत्पतिः

एकदा देवदत्तस्तु वार्तालापे स्मितानन:।
एवमाह निजां भार्याम् उद्विग्नां कर्त्तुमिच्छुक:।।

प्रत्यहं साम्प्रतं स्वप्ने निशायां प्रतिवेशिनी।
'लता'नाम्नी समायाति मत्पार्श्वे सहसा प्रिये!।।

देवदत्तवचः श्रुत्वा तत्पत्नी प्रत्युवाच यत्।
ब्रूहि सैकाकिनी स्वप्ने त्वत्समीपमुपैति किम्?।।

पत्न्यास्तत्प्रश्नमाकर्ण्य देवदत्तो जगाद यत्।
एकाकिनीति सत्यं तत् परं ज्ञातं कथं त्वया?।।

तस्य पत्नी तदा ब्रूते यतोहि प्रत्यहं निशि।
लतायाः पतिरायाति मम स्वप्नेषु साम्प्रतम्।।

## भार्या संन्यासकारणम्

संन्यासिवेशमापन्नं काषाय-वस्त्रधारिणम्।
पुरुषं पृष्टवान् दीनो देवदत्तो नताऽऽननः।।

पत्नी मम वशे नास्ति कृपया दिशतां भवान्।
वशीकरणवृत्तार्थम् उपायं कमपि प्रभो!।।

देवदत्तस्य तद्वाचं श्रुत्वा साधुः स दुःखितः।
किञ्चिन्मौनं समालम्ब्य सोच्छ्वासं प्रत्युवाच यत्।।

सखे! किमपि चाऽज्ञास्यमुपायं यद्यहं तदा।
संन्यासवेषमेनं वै नाऽग्रहीष्यं कथञ्चन।।

## गृहयुद्धे दिवंगतः

मृत्योराकस्मिकत्वे च कारणं ज्ञातुमिच्छुकः।
पुलिसस्याऽधिकारी तु सुशीलामेवमाह यत्॥

कृपया कथ्यतां तावद् धैर्येण यद् भवत्पतिः।
कारणं किमभूद् रात्रावकस्मान्निधनं गतः?॥

तस्य प्रश्नं समाकर्ण्य सुशीला प्रत्युवाच यत्।
प्रवर्तित्ते तु सामान्ये गृहयुद्धे दिवंगतः॥

## युवत्यां सस्पृहास्तु ते

एकदा देवदत्तस्य पत्नी तं निजगाद यत्।
अहं च तव माता च त्वं चैवेमे त्रयो जनाः॥

यद्येकस्यां हि नौकायाम् आरुह्य सुखपूर्वकम्।
नौकाविहारं कुर्वाणाः प्रविशेयुः सरोवरे॥

परन्तु तत्र दुर्भाग्यात् निमज्जेत् तरणिस्तदा।
ब्रूहि कां पूर्वमुद्धर्त्तुं त्वं प्रयासं विधास्यसि?॥

पत्न्यास्तद्वचनं श्रुत्वा देवदत्तो ब्रवीति यत्।
त्वामेव रक्षितुं पूर्वं प्रयासं करवाण्यहम्॥

पत्युस्तद्वचनं श्रुत्वा भार्या बुद्धिमती तदा।
मन्दं मन्दं विहस्यैवं देवदत्तं ब्रवीति यत्॥

अरे ! तत्र त्वया वृद्धा ध्यातव्या जननी तदा।
यतो मां बहवस्त्रातुं युवका उद्यता ध्रुवम्॥

## अनेकाः प्रेमिणः प्रभो !

हत्याऽभियोगमापन्नं पुरुषं प्राह विस्मितः।
न्यायाधीशो यदेवं त्वं कथं क्रोधसमन्वितः॥

स्वपत्नीं हतवान् किन्तु न तस्याः प्रेमिणं तदा।
गोलिकायाः प्रहारेण नाशं कर्त्तुं समुद्यतः?॥

न्यायाधीशस्य तत्प्रश्नं श्रुत्वा स पुरुषस्तदा।
सरोषभावमापन्नः प्रत्युवाच नताऽऽननः॥

कियन्तः प्रेमिणस्तस्या वध्याः स्युस्तन्मया प्रभो!।
भार्यैव गोलिका द्वारा तत्क्षणं सा विनाशिता॥

## निजस्वप्ने करोषि किम्?

एकदा देवदत्तस्य भार्या रोषपरायणा।
देवदत्तमुवाचैवं सदा युद्धरता गृहे॥

अत्यन्तं हीनवृत्तस्त्वं पतितोऽसि तथैव च।
पतिरूपेण मत्वा त्वां लज्जामनुभवाम्यहम्॥

चकितो देवदत्तोऽथ श्रुत्वा भार्यावचस्तदा।
यदा कारणमपृच्छत् तदा सा पतिमाह यत्॥

रात्रौ स्वप्ने मया दृष्टं यद् भगिन्या समं मम।
एकान्ते विहसन् वार्त्तां प्रकरोषि मुहुर्मुहुः॥

पत्न्यास्तद्वचनं श्रुत्वा देवदत्तो ब्रवीति यत्।
परन्तु स तु स्वप्नोऽभूत् वृथा त्वं चिन्तिता कथम्?॥

पत्युस्तदुत्तरं श्रुत्वा पत्नी रोषान्विता पुनः।
क्रुश्यन्ती देवदत्तं सा पुनरेवं जगाद यत्॥

यदा स्वप्ने मदीये च कुकृत्यं कुरुषे तथा।
निजस्वप्ने तदा किं किं न जाने क्रियते त्वया?॥

## भार्या मे सिंहसदृशी

पूर्वं शल्यचिकित्सातः चिकित्सक उवाच यत्।
रक्तवर्गमहं पत्न्यास्तव ज्ञातुं हि कामये।।

चिकित्सकवचः श्रुत्वा देवदत्त उवाच यत्।
सिंह्या रुधिरमप्यस्यै भवान् दातुं समीहते।।

## योग्यास्त्यक्त्वा पलायिताः

एकदा देवदत्तस्य पत्नी संक्षुब्धमानसा।
कुपिता कलहे गेहे देवदत्तं ब्रवीति यत्।।

पूर्वं मम विवाहस्य प्रस्तावेषु न संशयः।
त्वत्तो योग्यतमाश्चाऽऽसन् पुरुषा बहवः परम्।।

महद् दुर्भाग्यमेतन्मे यत्प्राप्तस्त्वादृशः पतिः।
अकर्मण्यस्तथा हीनो धिया शून्यस्तथैव च।।

पत्न्यास्तद्वचनं श्रुत्वा संक्षुब्धः कुपितस्तथा।
देवदत्तोऽपि साक्रोशं पत्नीमेवम् उवाच यत्।।

सत्यं तद् बुद्धिमन्तस्ते योग्या आसन् नरा यतः।
योग्यताकारणादेव त्यक्त्वा त्वां ते पलायिताः।।

## पति नैंव पलायते

गृहस्याऽन्तर्विवादे तु संक्षुब्धः पतिरेकदा।
पत्न्या अभिमुखो भूत्वा वाक्यमेवम् उवाच यत्।।

तथा तर्जयसे वाग्भिः प्रायशो मां निरन्तरम्।
यथा कश्चित्तु संसारे भृत्यं चापि न तर्जयेत्।।

पत्युस्तद्वचनं श्रुत्वा पत्नी संक्षुब्धमानसा।
पतिमाग्नेयनेत्राभ्यां पश्यन्ती निजगाद यत्॥

कथं तर्जयितुं शक्यो भृत्य एवं निरन्तरम्।
तथा हि तर्जनेनाऽसौ न भवेत् किं पलायितः?॥

## महत्ता भार्यया कृता

पत्न्याः सन्तर्जनं श्रुत्वा क्षुब्धः पतिरुवाच यत्।
कथं धर्षयसे देवि! माम् एवं हि निरन्तरम्॥

पत्युस्तद्वचनं श्रुत्वा पत्नी तत्रैवमाह यत्।
त्वां महापुरुषं तावद् विधातुं कामये यतः॥

तुलसी-कालिदासाद्याः श्रूयन्ते बहवो नराः।
स्वपत्नीनां तिरस्कारैर्महत्त्वं लेभिरे भुवि॥

## हानिरत्र त्वया कृता

कृपणः पुरुषः कश्चित् पत्नीमेवम् उवाच यत्।
रक्षितं व्ययमकृत्वा मयाऽद्य रूप्यकद्वयम्॥

कथं तत्कृतवान्? एवं पृष्टे स प्रत्युवाच यत्।
पृष्ठतो बसयानस्य धावन् गृहमिहाऽऽगतः॥

तस्य तद्वचनं श्रुत्वा पत्नी क्षुब्धा ब्रवीति यत्।
अपव्ययं धनस्याऽत्र त्वया किं नैव लक्षितम्?॥

यदि त्वम् अनुधावन् वै टैक्सीयानस्य पृष्ठतः।
आगमिष्यस्तदा लाभः पञ्चाशद् रूप्यकैर्मतः॥

## मन्दता शिरसि स्मृता?

वार्त्तालाप-प्रसङ्गेऽथ देवदत्तो यदैकदा।
गृहिणीं निजगादैवं तर्कपूर्णमिदं वचः।।

मानवानां शरीरस्य मदङ्गं स्यात् सुदुर्बलम्।
तत्रैवाऽऽक्रमणं रोगाः प्रायः कुर्वन्ति सर्वदा।।

पत्युस्तद्वचनं श्रुत्वा तत्पत्नी सस्मितानना।
मन्दं मन्दं विहस्याऽथ देवदत्तमुवाच यत्।।

सत्यमेव ब्रवीषि त्वम् अद्यैवाऽवगतं मया।
यत्कथं स्वशिरःपीड़ां प्रायश्चर्चयते भवान्।।

## मूर्खतां स ददौ कथम्?

एकदा कलहे गेहे पतिः संक्षुब्धमानसः।
पत्नीमाक्रोशभावेन वचनं त्वेवम् आह यत्।।

न जाने हेतुना केन तुभ्यं स चतुराननः।
सौन्दर्येण समं तावत् मूर्खतामपि दत्तवान्।।

पत्युस्तद्वचनं श्रुत्वा तूष्णीभावमपास्य सा।
पत्नी रोषसमाविष्टा पतिमेवम् उवाच यत्।।

सौन्दर्यं दत्तवान् ब्रह्मा मह्यमेतद् विचार्य यत्।
प्रस्तावं स्वविवाहस्य स्वयं मां कथयिष्यसि।।

मूर्खतां दत्तवान् एतद् विचार्य मे प्रजापतिः।
यदहं स्वीकरिष्यामि प्रस्तावं सहसा तव।।

## पतिस्ते कुरुतां स्वस्थम्

एकदा स्वसखीं गीतां निजगाद रमा त्विदम्।
शिरःपीड़ाऽस्ति मे तीव्रा लाभो नैवौषधेन च।।

तस्य तद्वाचमाकर्ण्य गीता ताम्प्रत्युवाच यत्।
यदा मे जायते पीड़ा देवदत्तस्तु मे पतिः।।

नीत्वा शिरः स्वकीयाऽङ्के शनैराश्लिष्य चैव माम्।
मुहुः परिमृजन्नास्ते शिरोर्तिरहिता ततः।।

तदाकर्ण्य रमा तत्र गीतामेवम् उवाच यत्।
यद्येवं तर्हि तेनैव पीडामपनयाम्यहम्।।

## कथं जानासि तत्स्वादम् ?

नीरसं स्वादहीनं च भुञ्जानो भोजनं यदा।
क्षुब्धः पतिरुदासीनः पत्नीमेवम् उवाच यत्।।

त्वयाऽद्य भोजनं तावन्निर्मितं कीदृशं त्विदम्।
गोमयस्येव स्वादोऽस्य न किंचिदपि रोचते।।

पत्युस्तद्वचनं श्रुत्वा पत्नी खिन्नाऽवदत् तदा।
गोमयस्य कदा स्वादः पुरा चाऽऽस्वादितस्त्वया।।

## स्वभावे तव विस्मृतिः

एकदा नगरस्याऽथ प्रसिद्धे भोजनालये।
कृपणो देवदत्तस्तु सपत्नीकः प्रविष्टवान्।।

स पत्नीमब्रवीत् तत्र यद् वयमत्र हे प्रिये!।
एकैकमपरं तावत् मिष्ठान्नं भक्षयामहे।।

पत्युस्तद्वचनं श्रुत्वा तस्य पत्नी तु तत्क्षणम्।
कुर्वन्ती विस्मयं प्राह देवदत्तमिदं वचः।।

''एकैकम् अपरम्'' एवं कथं वाक्यं ब्रवीषि भो!।
अधुना त्वेकमप्यत्र मिष्ठान्नं नैव भक्षितम्।।

पत्न्यास्तद्वचनं श्रुत्वा देवदत्तो जगाद यत्।
अरे! त्वं तु सदा शीघ्रं विस्मरस्येव सर्वथा।।

स्मर यद् विगते वर्षे यदाऽत्र वयमागताः।
एकैकमिह मिष्ठान्नं तदाऽस्माभिस्तु भक्षितम्।।

## रमन्ते कुत्र देवताः ?

भार्यायाः पादसंवाहं वस्त्रप्रक्षालनं तथा।
प्रत्यहं वीक्ष्य कुर्वन्तं देवदत्तं मनस्विनम्।।

पप्रच्छुः कारणं तत्र सखायो विस्मिता यदा।
असौ तान् उक्तवान् एवं तदा गम्भीरया गिरा।।

देवान् प्रीणयतुं काङ्क्षे शास्त्रेषु कथितं यथा।
''यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः''।।

## भार्या तु त्रिमुखी स्मृता

प्रारम्भिक-त्रिवर्षेषु विवाहाऽनन्तरं सखे!।
विद्यते पतये तावत् पत्नी चन्द्रमुखी सदा।।

ततो वर्षत्रयं यावद् अस्ति सूर्यमुखी च सा।
प्राप्ते तु सप्तमे वर्षे पत्नी ज्वालामुखी भवेत्।।

## मृगयाः सिंह पलायते

कार्यालये तु वेपन्ते यद्भयात् कर्मचारिणः।
वीरविक्रमसिंहोऽभूत् नाम तस्य नरस्य वै॥

गृहे भार्याभयादेष उच्चैरपि न भाषते।
पूर्वजैः सत्यम् उक्तं यत् "मृगात् सिंहः पलायते"॥

## स्यातां कौ मध्यमोत्तमौ?

प्रथमायां निशायां वै विवाहाऽनन्तरं पतिम्।
व्याकरणस्य विद्वांसं नवोढा निजगाद यत्॥

प्रथमः पुरुषश्चाऽसि त्वमेव मम जीवने।
संगतः स्नेहसंसिक्त इति सत्यं ब्रवीमि ते॥

पत्न्यास्तद्वचनं श्रुत्वा पप्रच्छ तां पतिस्तदा।
मध्यमः पुरुषः कस्ते? उत्तमः पुरुषश्च कः?॥

## कारागारे सुखी भवान्

कारागारे वसानं च काचित् पत्नी निजं पतिम्।
यत् पत्रं प्रेषयामास तत्रेयं पङ्क्तिरादिमा॥

अत्राऽहं सर्वथा वर्त्ते प्रसन्ना कुशलान्विता।
मन्ये तत्र भवांश्चाऽपि भवेत् सकुशलः सुखी॥

## निजमातुर्गृहं गता

कलहैः पीडिता पत्नी पतिमेवम् उवाच यत्।
मातुर्गेहं गमिष्यामि सम्प्रत्यद्यैव निश्चितम्॥

पत्न्यास्तद्वचनं श्रुत्वा पतिस्तु विस्मिताननः।
मन्दं मन्दं विहस्याऽथ भार्यां स निजगाद यत्॥

तव माता गृहे नाऽस्ति निरर्थं गमनं यतः।
असावपि पतिं युद्ध्वा निजमातुर्गृहं गता॥

## दैवज्ञास्तत्र मौनिनः

ज्यौतिषा निजपञ्चाङ्गे, व्यर्थमेव लिखन्ति यत्।
प्रभावो ग्रहणादीनां वर्त्तते जीवने महान्॥

न सूर्यग्रहणस्याऽभूत् प्रभावो मम जीवने।
न चन्द्रग्रहणस्याऽपि प्रभावो लक्षितो मया॥

एकस्य ग्रहणस्यैव प्रभावो यस्तु लक्षितः।
तत्पाणिग्रहणं चाऽस्ति दैवज्ञास्तत्र मौनिनः॥

## अहमस्मि गृहस्वामी

कलहे प्रवर्त्तमाने तु पतिपत्न्योस्तु मध्यगे।
यदाऽऽक्रान्तवती पत्नी पतिर्भीत्वा पलायितः॥

पलाय्य स च खट्वाया नीचैर्गूढोऽभवद् यदा।
'रे भीरो! बहिरायाहि' पत्नी तम् एवमाह्वयत्॥

समाह्वानं सरोषं तत् श्रुत्वा पतिरुवाच यत्।
अहमस्मि गृहस्वामी निःसरिष्ये यदृच्छया॥

## द्रौपदी पञ्चभर्तृका

द्यूत-क्रीडानिमग्नं तु दृष्ट्वा सातिशयं पतिम्।
यदा न्यवारयत् पत्नी रुष्टः पतिरुवाच यत्।।

दीव्यति द्वापरे यो वै धर्मराजो युधिष्ठिरः।
तथा क्रीडाम्यहं द्यूतम् आपत्तिस्तत्र ते कथम्?।।

पत्युस्तद्वचनं श्रुत्वा पत्नी शान्तमुवाच यत्।
विस्मर्त्तव्यं च नाप्येतद् द्रौपदी पञ्चभर्तृका।।

## नरके निवसाम्यहम्

सरोषं कलहे पत्नी पतिमेवम् उवाच यत्।
विवाहात् प्राक् तु मां तावद् बहुधैवं त्वमुक्तवान्।।

नाऽहं स्वर्गेऽपि वत्स्यामि क्षणमात्रं त्वया विना।
नरकेऽपि त्वया सार्धं सदैव वस्तुम् उद्यतः।।

ततः क्रोधाभिभूतायाः कर्कशायास्तु दुःखदम्।
पत्न्यास्तद्वचनं श्रुत्वा पतिरेवम् उवाच यत्।।

सत्यं ब्रवीषि भो देवि! दुर्भाग्यं मम वर्त्तते।
यदयम् अभिलाषो मे पूर्णीभूतोऽस्ति साम्प्रतम्।।



# प्रेमिकाविषयकाणि व्यंग्यानि

## अवेहि मम चातुर्यम्

एकदा युवकः कश्चिद् युवतीं काञ्चिदाह यत्।
अरे! किं त्वं मया साकं विवाहं रचयिष्यसि?॥

तच्छ्रुत्वा युवती प्राह यदहं चतुरं तथा।
वीरं च युवकं नित्यं विवाहे कामये सदा॥

युवत्या वचनं श्रुत्वा युवकस्तं जगाद यत्।
किमेतद् विस्मरस्यत्र यदहं त्वां पुरैकदा॥

निमज्जन्त्यां तु नौकायां दृष्ट्वा नद्यां मुहुर्मुहुः।
तीर्त्वा नदीं तव प्राणान् रक्षितुं कृतनिश्चयः॥

युवकस्य वचः श्रुत्वा संस्मृत्य तस्य वीरताम्।
विवाहात् तं निराकर्त्तुं युवती पुनराह यत्॥

तदर्थं तु कृतज्ञाऽहं मत्वा तव पराक्रमम्।
परन्तु नैव चातुर्यं जानामि ते किमप्यहम्॥

युवत्या वचनं श्रुत्वा चतुरो युवकस्तु सः।
मन्दं मन्दं विहस्यैवं सुन्दरीं प्रत्युवाच यत्॥

श्रृणु भो! नैव जानासि रहस्यं तद् वदाम्यहम्।
छिद्रं तस्यां हि नौकायां मयैव प्रकृतं तदा॥

## त्वादृशा बहुप्रेमिणः

प्रेमिकाया गृहे गत्वा तस्याः पितरमेकदा।
स्वामिनं कोटिरूप्याणां देवदत्तो जगाद यत्।।

भवदीया सुताऽत्यन्तं प्रेमाऽऽविद्धा मया समम्।
विवाहाऽर्थमपि प्रायो बहुधा निजगाद माम्।।

देवदत्तवचः श्रुत्वा प्रेमिकायाः पिता तदा।
स्वागतं तस्य कुर्वाण एवं वचनमाह यत्।।

द्वाविंशः पुरुषश्चाऽसि त्वमत्र यं सुता मम।
तथाविधं वचो दत्त्वा समाश्वस्तं करोति सा।।

## वरं वृद्धो धनी पतिः

एकदा युवकः कश्चित् सुन्दरीं यवतीं स्वयम्।
विवाहस्याऽथ प्रस्तावं कथयन् निजगाद यत्।।

सुन्दरोऽहं युवा स्वस्थः परन्तु निर्धनः प्रिये!।
पतिरूपेण तेऽवश्यम् उपयुक्तश्च स्यामहम्।।

तस्य तद्वचनं श्रुत्वा युवती सा सुदर्शना।
मन्दं मन्दं विहस्यैवं युवकं प्रत्युवाच यत्।।

यदि वृद्धस्तथाऽस्वस्थः परन्तु धनिको भवेः।
तदा त्वं मत्कृते नूनम् उपयुक्ततरः पतिः।।

## चुम्बनेऽपि कथं प्रश्नः?

बहुकालस्य पश्चात्तु देवदत्तस्त्वथैकदा।
रहः सामीप्यमालभ्य प्रेमिकां निजगाद यत्॥

किमहं चुम्बनं तऽत्र कर्त्तुं शक्नोमि हे प्रिये?।
तच्छ्रुत्वा प्रेमिका किञ्चित् न तदा प्रत्युवाच तम्॥

तस्या मौनं समालक्ष्य देवदत्तो पुनर्यदा।
द्वि-त्रिवारं तमपृच्छत् न चैवोत्तरमाप्तवान्॥

अथ क्षुब्धो यदा प्राह ब्रूहि भो! बधिराऽसि किम्?।
प्रेमिकाऽपि तदा क्षुब्धा घूर्णयन्ती मुहुर्मुहुः॥

सरोषभावमापन्ना देवदत्तं ब्रवीति यत्।
विकलाङ्गोऽसि किं यत्त्वं पृच्छसीह पुनः पुनः॥

## इदम् आश्चर्यमष्टमम्

एकदा प्रेमिकायास्तु कस्मिंश्चिदातुरालये।
ज्ञात्वा नियोजनं तावत् प्रेमी पत्रं लिलेख यत्॥

इच्छामि यदहं रुग्णो भूत्वा तत्राऽऽतुरालये।
प्रविष्टः स्यां तथा त्वं च परिचर्यां कुरुष्व मे॥

तस्य पत्रं समासाद्य प्रेमिकाऽपि लिलेख यत्।
संसारस्य तदाश्चर्यम् अष्टमं भविता यतः॥

अहं साम्प्रतमेतस्मिन् नगरस्याऽऽतुरालये।
प्रसूति-कक्ष-कर्त्तव्यं निर्वहामि नियोजिता॥

## एतत् कस्याऽऽपणस्य भो!

एकदा देवदत्तस्य प्रेमिका स्वगृहे यदा।
निमन्त्र्य देवदत्तं च विशेषाऽऽग्रहपूर्वकम्।।

नानाभोज्यानि वस्तूनि स्वादिष्ठानि प्रियाणि च।
सोत्साहं भोजयित्वा सा पप्रच्छ-कीदृशनि भो?।।

देवदत्तस्तु भोज्यानां पदार्थानां पुनः पुनः।
प्रशंसां बहु कुर्वाणः प्रेमिकामेवम् आह यत्।।

स्वादिष्ठं सर्वमेवाऽस्ति ज्ञातुमिच्छाम्यहं परम्।
समानीतमिदं सर्वं कस्मादेवाऽऽपणात् प्रिये!।।

## विवाहबन्धनं भिन्द्धि

येन केनाऽप्युपायेन वशीकर्त्तुं समुत्सुकः।
विवाहितो नरः कश्चित् प्रेमिकामेवम् आह यत्।।

यदि त्वं कथयेस्तावद् गगनादपि हे प्रिये!।
तारकांस्त्रोटयित्वा च त्वदर्थम् आनयाम्यहम्।।

प्रेमिणो वचनं श्रुत्वा प्रेमिका सा तु तत्क्षणम्।
धर्षयन्तीव वाग्बाणैर्वचनं तम् उवाच यत्।।

जानामि साहसं तेऽहं कि मुधैव विकत्थसे।
त्रोटयस्व ततः पूर्वं विवाह-बन्धमेव तम्।।

## निर्धना अविवाहिताः

सुन्दर्यो निर्धना लोके सर्वदा प्रेमिणो बहून्।
प्राप्नुवन्ति विनाऽऽयासम् इति सत्यं तु वर्त्तते।।

कदाचिदपि किन्त्वेताः प्रयासैर्बहुभिः कृतैः।
नैकं चाऽपि पतिं लोके प्राप्नुवन्तीति कष्टदम्।।

## सुन्दरीभिर्वृतं जगत्

उपेक्षावृत्तिमालक्ष्य प्रेमिणश्चैकदा रुषा।
प्रेमिका निजगादैव स्वकीयम्प्रेमिणं तदा।।

बहुवारं तु मां तावत् पूर्वं कथयसि स्म यत्।
सम्पूर्ण एव संसारस्तुच्छस्त्वत्पुरतो भवेत्।।

परन्तु साम्प्रतं नैव तादृशं वचनं त्वया।
मदर्थम् उच्यते स्निग्धं किमत्र कारणं भवेत्?।।

तस्यास्तद्वचनं श्रुत्वा प्रेमी तं निजगाद यत्।
मम सांसारिके ज्ञाने साम्प्रतं वृद्धिमागतम्।।

## पूर्वमेव हि जागर्मि

वार्त्तालाप-प्रसङ्गे च देवदत्तस्त्वथैकदा।
स्वकीयां प्रमिकां स्निग्धं वाक्यमेतद् उवाच यत्॥

प्रातः प्रातर्यदैवाऽहं सुप्त्वोत्तिष्ठामि हे प्रिये!।
तदा मम विचारेषु त्वमेवाऽऽयासि सर्वदा॥

देवदत्तवचः श्रुत्वा प्रेमिका सा ब्रवीति यत्।
इदमेव तु वाक्यं मां यज्ञदत्तोऽपि भाषते॥

देवदत्तस्तदा ब्रूते सत्यं स्यात् किन्त्वहं सदा।
पूर्वमेव हि जागर्मि यज्ञदत्तादपि प्रिये!॥

## त्वादृश्यो बहुप्रेमिकाः

सरोषा प्रेमिका पत्रे प्रमिणं तु लिलेख यत्।
प्रत्यावर्त्तय मे च्छायाचित्रं शीघ्रमितः परम्॥

बह्वीनां सुन्दरीणां च चित्राणां सञ्चयं तदा।
सम्प्रेष्य प्रेमिकायै स प्रेमी पत्रे लिलेख यत्॥

छायाचित्रं निजं नीत्वा त्वेतस्माच्चित्र-सञ्चयात्।
चित्राण्यन्यानि मत्पार्श्वे प्रेष्यन्तां कृपया पुनः॥

अनेकाः प्रमिकास्तावत् त्वादृश्यो मम सन्त्यतः।
कथमप्यधुना तेऽहं न स्मरामि मुखाकृतिम्॥



# राजनेतृ-विषयकाणि व्यंग्यानि

## भूते दत्तं न विस्मार्यम्

समाज सेवकः कश्चिन्नेता स्वकीय-भाषणे।
जनान् सम्बोधयंस्तत्र सबलं वाक्यमाह यत्।।

कृपया भूतकालस्थं सर्वं विस्मृत्य साम्प्रतम्।
भविष्यं चिन्तनीयं चेद् देशस्य प्रगतिस्तदा।।

तस्य तद्वचनं श्रुत्वा कश्चित् श्रोतृषु संस्थितः।
नरस्तत्र समुत्थाय सहसा प्रत्युवाच यत्।।

कृपया भूतकाले यद् भवते दत्तवान् अहम्।
रूप्यकाणि सहस्रं तद् विस्मार्यं न कदाचन।।

## उद्घाटन-द्वय कार्यम्

विलम्बेन समुत्थाय प्रातः प्रातर्यदा क्वचित्।
नेता कश्चित् समारोहे गन्तुकामो यदाऽभवत्।।

निर्गन्तुमुद्यतं दृष्ट्वा विना स्नानादिकं तथा।
नेतारमब्रवीत् तत्र तत्पत्नी विस्मिताऽऽनना।।

कथं त्वं भो! विना स्नानं जलपानं विना तथा।
गृहान्निर्गच्छसि प्रातः समारोहेषु साम्प्रतम्?।।

पत्न्यास्तद्वचनं श्रुत्वा नेता तत्र ससम्भ्रमः।
गृहात् सपदि निर्गच्छन् पत्नीमेवम् उवाच यत्।।

स्नानागारस्य नव्यस्य कृत्वा चोद्घाटनं प्रिये!।
शुभारम्भोऽस्ति कर्त्तव्यो जलपान-गृहस्य च।।

## फलम् अनशनस्य तत्

बहुकालस्य पश्चात्तु नेतुः कस्यचिदेकदा।
गृहे सुतः समुत्पन्नः कृशकायः सुदुर्बलः।।

तं तथा दुर्बलं दृष्ट्वा नेतुर्भार्या तदा पतिम्।
धर्षयन्ती स्ववाग्बाणैरेवं वचनम् अब्रवीत्।।

बुभुक्षा-हड़तालेषु बहुधाऽनशनेषु च।
व्यापृतो दृश्यसे यत्त्वं तस्यैव फलमस्ति भो!।।

## हृदयं परिवर्त्तितम्

परित्यज्य दलं स्वीयं नेतारो ये तु साम्प्रतम्।
दलेष्वन्येषु गच्छन्ति विश्वासघातकास्तु ते।।

परन्तु दलमन्यं ये त्यक्त्वाऽऽयान्ति निजे दले।
हृदयस्य परीवर्त्तस्तत्कृते कथ्यतेऽधुना।।

## समाचारान् विवर्जयेत्

नेता चिकित्सकम्प्राह किमहं करवाणि यत्।
हृद्रोगो नैव वर्धेत ममायं तदितः परम्।।

नेतुस्तद्वचनं श्रुत्वा मन्दस्मितिपुरःसरम्।
चिकित्सकोऽपि नेतारं तदैवम्प्रत्युवाच यत्।।

परिवर्त्तनसम्बद्धाः वृत्तान्ताः मन्त्रिमण्डले।
ये समाचारपत्रेषु मुद्र्यन्ते नैव तान् पठेत्।।

## परस्परं भावयन्तः

दस्यवो राजनेतृणां छायामाश्रित्य हर्षिताः।
नेतारश्चाऽपि दस्यूनाम् आश्रयेण प्रफुल्लिताः।

शास्त्रसिद्धम् इदं कार्यं ये निन्दन्ति विरोधिनः।
वराकास्ते न जानन्ति रहस्यं परमं यतः।।

गीतायां भगवान् कृष्णः स्वयमेवोक्तवांस्तथा।
"परस्परं भावयन्तः श्रेयः परमवाप्स्यथ"।।

## भाग्यं फलति सर्वत्र

कस्यचित् कृषकस्याऽऽसन् चत्वारस्तनयाःप्रियाः।
त्रयस्तत्र कुशाग्रास्ते नित्यम् अध्ययने रताः।।

एकश्चिकित्सको जातस्त्वभियन्ता तथाऽपरः।
अधिवक्ता तृतीयश्च प्रसिद्धः समपद्यत।।

परम् एको महामूर्खश्चतुर्थस्तनयोऽभवत्।
नित्यम् अध्ययनाद् दूरो विद्या-श्रम-विवर्जितः॥

कक्षायां स दशम्यां तु द्विरनुत्तीर्णतां गतः।
किंकर्त्तव्यविमूढ़ात्मा राजनीतौ प्रविष्टवान्॥

विधायकपदे भूत्वा प्रत्याशी स त्वथैकदा।
कथञ्चिद् विजयं प्राप्य शिक्षामन्त्रित्वमाप्तवान्॥

स्मरामि बहुधाऽत्रोक्तं पूर्वजैः सत्यमेव यत्।
"भाग्यं फलति सर्वत्र न विद्या न च पौरुषम्"॥

## परधर्मो भयावहः

दास्यवं मन्यमानं तु निकृष्टं कर्म चैकदा।
दस्युः कश्चिद् यदा चैच्छत् कर्त्तुमात्मसमर्पणम्॥

राजनेता तदा ब्रूते तमेवं स्निग्धया गिरा।
निवारयन् दस्युमेनं तस्माद् आत्मसमर्पणात्॥

निर्वाचनं न जेष्यामि त्वद्विनाऽहं कथञ्चन।
पश्यामि न च कल्याणं तवाऽप्यन्यत्र कर्मणि॥

कृष्णश्चाऽपि गीतायां भगवानुपदिदेश यत्।
"स्वधर्मे निधनं श्रेयः परधर्मो भयावहः"॥

## नेता सर्वत्र पूज्यते

विद्वत्त्वं राजनेतृत्वं नैव तुल्यं कदाचन।
गृहेऽपि नाऽर्च्यते विद्वान् नेता सर्वत्र पूज्यते॥

विद्यारम्भे विवाहे च दुर्भिक्षे जनविप्लवे।
रोगे शोके जलौघे च नेता सर्वत्र व्यापकः॥

ज्ञान-विज्ञान-गोष्ठीषु मुख्यवक्ता भवत्यसौ।
पतिः सर्वसभानां च सर्वज्ञानमयो हि सः।।

वित्तं गृह्णाति श्रेष्ठिभ्यो मतं गृह्णाति निर्धनात्।
सर्वं भोग्यं नयत्येष तस्मान्नेताऽयम् उच्यते।।

असारे खलु संसारे नेता सर्वार्थसाधकः।
रमन्ते सुखभोग्येषु नेतृत्वम्प्राप्य मानवाः।।

## प्रश्नोऽयं बहु बाधते

कश्चित् प्रत्याशिनं तावन्मतदाता तु पृष्टवान्।
निर्वाचने जयम्प्राप्य किं करिष्यसि मां वद?।।

तस्य प्रश्नं समाकर्ण्य प्रत्याशी प्रत्युवाच यत्।
प्रश्नो महत्त्वपूर्णोऽयं न कश्चिदपि किन्त्वहम्।।

पराजितो भविष्यामि यदि निर्वाचने तदा।
करिष्यामि किम् इत्येष प्रश्नो मां बहु बाधते।।

## सुरक्षा मन्त्रिणां कथम्?

भ्रष्टाचारं वर्धमानम् उन्मूलयितुमिच्छुकः।
युवकानाम् महासंघो निर्णयं कृतवांश्च यत्।।

भ्रष्टाचारेषु लिप्ता ये जनास्तेषाम् इतः परम्।
सार्वजनिकरूपेणाऽपमानो हि विधास्यते।।

आकर्ण्य घोषणामेनां शासनेन तु मन्त्रिणाम्।
सुरक्षाया व्यवस्था च महती सुदृढा कृता।।

## आश्वासनस्य साफल्यम्

जलौघेन समस्ता वै ग्रामा आप्लाविता यदा।
तन्निरीक्ष्य तदा नेता भाषणे निजगाद यत्॥

पानीयस्य व्यवस्था च ग्रामे ग्रामे विधास्यते।
यथोक्तं घोषणापत्रे तत्तु सम्पादितं स्वतः॥

## नेतारो दस्यवः समाः?

अन्तःप्रेरणया कश्चिद् दस्युस्त्यक्त्वा तु दस्युताम्।
आत्म-समर्पणं कृत्वा कारागारे प्रविष्टवान्॥

निजैराचरणैर्भद्रैः कारागारेऽप्यसौ नरः।
व्यतीत्य पञ्चवर्षाणि शीघ्रं मुक्तः कथञ्चन॥

राजनीति-सुसम्बद्धाः कारागारमुखे तदा।
कार्यकर्त्तार आगत्य सस्नेहं तं वदन्ति यत्॥

अस्मदीये दले भूत्वा प्रविष्टः कृपया भवान्।
नेतृत्वं कुरुतां तावद् एतद्धि कामयामहे॥

तच्छ्रुत्वा वचनं तेषां स नरः प्रत्युवाच यत्।
द्वितीयेन पथा नाऽहं पुनरिच्छामि दस्युताम्॥

# निरर्था पदयात्रा सा

विधायकपदं यैश्च प्राप्तं वा सांसदं पदम्।
यैस्तु मन्त्रिपदं प्राप्तं राज्यपालपदं तथा।।

प्रधानमन्त्रिणो यैर्वा प्राप्तं राष्ट्रपतेः पदम्।
ध्रुवं सुसफला तेषां पदयात्रा हि भारते।।

निरर्था पदयात्रा तु श्रीविनोबा--महात्मनः।
येनैकमपि न प्राप्तं पदं स्वाधीनभारते।।



# न्यायालय-विषयकाणि व्यङ्ग्यानि

## नाऽहम् आगतवान् स्वयम्

पुराऽपि बहुधा चोक्तं यत्पुनस्ते मुखाकृतिम्।
न्यायालये न चेच्छामि द्रष्टुं किन्तु त्वमागतः?।।

न्यायाधीशस्य तद्वाक्यं श्रुत्वा चौरो ब्रवीति यत्।
भगवन्! नाऽत्र दोषो मे यतो हि बहुधा स्वयम्।।

तान् राजपुरुषान् एनं निर्देशं भवतामहम्।
उक्तवान् किन्तु तैरेव निगृह्य प्रापितस्त्विह।।

## सेवानिवृत्तिरस्ति किम्?

न्यायाधीशोऽभियुक्ताय दण्डमुद्घोषयन् यदा।
सुधारमिच्छुकस्तं च वाक्यमेवम् उवाच यत्।।

मन्ये त्वम् अन्तिमं वारं समागच्छसि मत्पुरः।
भविष्यत्समये नैव पुनरत्राऽऽगमिष्यसि।।

तस्य तद्वचनं श्रुत्वाऽभियुक्तः स जगाद यत्।
भवत्सेवानिवृत्तिः किं सद्यः सम्पत्स्यते प्रभो!।।

## अन्यत् पञ्च प्रमाणानि

वादे प्रवर्त्तमाने तु सहसा तत्र सत्वरम्।
अभियुक्तं तु निर्दोषं प्रमणीकर्त्तुम् इच्छुकः।।

न्यायाधीश-समक्षं यत् एकं फाइलपत्रकम्।
प्रस्तुवन् प्राह वाक्कीलो न्यायाधीशमिदं वचः।।

एतस्मिन् फाइले तानि प्रमाणानि भवन्ति वै।
येन ममाऽभियुक्तस्तु निर्दोषः सिध्यति प्रभो!।।

नीत्वा तत्फाइलं न्यायाधीशेनोद्घाटितं यदा।
स तत्र शतरूप्याणां दश नोटानि दृष्टवान्।।

तद् आलक्ष्य च विद्वान् स न्यायाधीशो जगाद यत्।
अस्तु पञ्च प्रमाणानि प्रदेयानि त्वया पुनः।।

 

# नरः स्वैरी सदाचारी?

एकदा देवदत्तस्तु विवाह-च्छेदमिच्छुकः।
न्यायाधीश-समक्षं च सवक्तव्यमुवाच यत्।।

केनचित् पुरुषेणाऽथ सार्धं पत्नी मम प्रभो!।
ह्यस्तने दिवसे नद्यास्तीरे मे दृष्टिमागता।।

तस्य तद्वचनं श्रुत्वा न्यायाधीशस्तमाह यत्।
त्वं कथं तद्दिने नद्यास्तीरे ब्रूहि गतोऽभवः?।।

न्यायाधीशस्य तत्प्रश्ने देवदत्तो ब्रवीति यत्।
भ्रमणार्थं गतोऽभूवं सुन्दर्या समम् एकया।।

# न्यायो वाक्कीलमाश्रितः

चौरकर्माऽभियुक्तस्तु न्यायाधीशमुवाच यत्।
मुच्यतां कृपया चाऽनुग्रहो मयि विधीयताम्।।

तस्य विलपनं श्रुत्वा न्यायाधीशो जगाद यत्।
किं त्वया प्रथमं वारं चौरकार्यमिदं कृतम्?।।

प्रश्नमेनं समाकर्ण्याऽभियुक्तःप्रत्युवाच यत्।
मया तु बहुधा चौर्यं कृतं दण्डं च लब्धवान्।।

परन्तु मम वाक्कीलः प्रथमं वारमेव सः।
न्यायालयेऽभियुक्तस्य पक्षे वादार्थम् आगतः।।

## आयाहि मे गृहे दिने

न्यायालये समायाते निर्णये श्राविते तथा।
हृष्टोऽभियोगमुक्तः सन् निर्दोषत्वमुपाश्रयन्।।

धन्यवादं तु विज्ञाप्य वाक्कीलम्प्राह तस्करः।
अभियोगादहं मुक्तस्तवैव कृपया प्रभो!।।

शीघ्रमेवाऽऽगमिष्यामि पुनश्च भवतां गृहे।
कृतज्ञतां स्मरिष्यामि मिष्ठान्नसहितं तथा।।

तच्छ्रुत्वा स तु वाक्कीलो विहस्य तमुवाच यत्।
दिने तत्र त्वामायाहि निशायां न कदाचन।।

## नाऽयं हन्ति न हन्यते

हत्याया अभियोगस्तु यदा सिद्धोऽभवत् तदा।
न्यायाधीशोऽभियुक्ताय मृत्युदण्डं प्रदत्तवान्।।

मृत्युदण्डं समाकर्ण्य त्वभियुक्तोऽपि निर्भयः।
न्यायाधीशमुवाचैवं वचनं शास्त्रसम्मतम्।।

हत्या कृता न कस्याऽपि न च हन्तुमहं क्षमः।
अज्ञानपारवश्येन त्वयाऽहं दण्डितोऽधुना।।

हत्याऽभियोगादेस्मान्मुञ्च मां ज्ञानवान् भव।
त्वादृशानेव गीतायां भगवानपि चोक्तवान्।।

"य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नाऽयं हन्ति न हन्यते।।"

## विषस्य विषमौषधम्

उत्कोच-ग्रहणे कश्चिन्निगृहीतो यदा भवेत्।
उत्कोचमेव दत्त्वाऽसौ अभियोगाद् विमुच्यते।।

उत्कोचस्याऽभियोगस्य कुर्यात्तेनैव नाशनम्।
पण्डितैः सत्यमॆ उक्तं यद् ''विषस्य विषमौषधम्''।।

## वसुधैव कुटुम्बकम्

चौरकर्माऽभियोगस्तु यदा सिद्धोऽभवत् तदा।
न्यायाधीशोऽभियुक्ताय कारादण्डं प्रदत्तवान्।।

कारादण्डं समाकर्ण्य त्वभियुक्तः स निर्भयः।
न्यायाधीशमुवाचैव वचनं शास्त्रसम्मतम्।।

परेषां नैव वस्तूनि गृहीतानि मया प्रभो!।
भवादृशं च मे चित्तं नाऽस्ति संकुचितं यतः।।

''अयं निजःपरो वेति गणना लघु चेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्''।।

## उपयोगं करोम्यहम्

चौरकर्माऽभियोगस्य निर्णयं श्रावयन् यदा।
न्यायाधीशोऽभियुक्तं तु प्रोवाच हर्षयन्निव।।

प्रमाणं सबलं किञ्चित् न चाऽत्राऽधिगतं यतः।
स्कूटरयानचौर्येऽस्मिन् तस्मान्मुक्तोऽसि साम्प्रतम्।।

श्रुत्वा तद्वचनं हृष्टोऽभियुक्तः स जगाद यत्।
किं तद्धि स्कूटरं श्रीमन्! प्रयोक्तुं शक्यतेऽधुना?।।

## अहं सेवानियोजकः

न्यायाधीशो यदा चौरं रुष्टः पप्रच्छ यत्त्वया।
कदापि कस्यचित् किञ्चिद् हितमप्यत्र साधितम्?।।

प्रश्नमेनं समाकर्ण्य चौरोऽपि तत्क्षणं तदा।
विनीतभावमापन्नो न्यायाधीशमुवाच यत्।।

अस्माकं कारणादेव विभागे पुलिसस्य तु।
बहवः पुरुषाः श्रीमन्! सेवायां निरता इति।।



# विद्यार्थि-विषयकाणि व्यंग्यानि

## महतां पदचिन्हं क्व?

कश्चिदध्यापकस्तावत् कक्षायामेवम् उक्तवान्।
महतां पदचिन्हेषु यातव्यं बालकैः सदा।।

अध्यापकवचः श्रुत्वा कश्चिच्छात्र उवाच यत्।
प्राप्स्यन्ते पदचिह्नानि महतां साम्प्रतं कुतः?।।

वायुयानेषु गच्छन्ति कारयानेषु चाऽपि ते।
अतस्तत्पदचिह्नानि नाऽधिगम्यानि वै क्वचित्।।

## तदैवाऽङ्कः प्रदास्यन्ते

अध्यापकस्तु कक्षायां छात्रान् एवमुवाच यत्।
क्रिकेट-खेल सन्दर्भे निबन्धं लिखताऽधुना।।

कश्चिच्छात्रोऽलिखत्तत्र महावृष्टेस्तु कारणात्।
न प्रारब्धा क्रिकेटस्य क्रीड़ा चाऽद्य कथञ्चन।।

तस्य लेखम्पठित्वा तु गुरुस्तत्र लिलेख यत्।
यदा प्रारप्स्यते क्रीडा तदैवाऽङ्कोऽपि दास्यते।।

## बिन्दुस्तु खलनायिका

प्रकुर्वन् गणिते प्रश्नं गुरुश्छात्रमुवाच यत्।
को बिन्दु-रेखयोर्मध्ये भेद इति तु मां वद?।।

गुरोस्तत्प्रश्नमाकर्ण्य छात्रस्तं प्रत्युवाच यत्।
रेखा तु नायिका ख्याता बिन्दुस्तु खलनायिका।।

## गुरो नेत्रेषु विकृतिः

विद्यालये तु कक्षायां छात्रः कश्चिदथैकदा।
नेत्रचिकित्सकेनैव सार्धमागत्य सस्मितः।।

प्राध्यापकं स्वकीयं स कुर्वन्निङ्गितमाह यत्।
नेत्राणां कृपयैतेषां विदधातु परीक्षणम्।।

छात्रस्य वचनं श्रुत्वा शिक्षको विस्मितोऽब्रवीत्।
अरे! किं भाषसे? नेत्रे मम स्वस्थे तु सर्वथा।।

गुरोस्तद्वचनं श्रुत्वा छात्रः स प्रत्युवाच यत्।
गुरो! नेत्रेष्व वश्यं स्यात् कश्चिद्दोषो महान् यतः।।

कदाचिद् गर्दभश्चाऽहम् उलूकश्च कदाचन।
कदाचित् उष्ट्रकश्चाऽहं प्रतीये भवते प्रभो!।।

## कृतो नैव परिश्रमः

परीक्षायामनुत्तीर्णं दुःखितम्पुत्रमेकदा।
विलोक्य जनकस्तं च सान्त्वयन् एवमब्रवीत्।।

मा कार्षीः दुखमेवं त्वं मन्ये भाग्ये तव प्रिय!।
लिखितं यत् तदेवाऽभूत् तत्र किं परिदेवनम्?।।

तातस्य वचनं श्रुत्वा पुत्रो जनकमाह यत्।
साधु जातं तदा सर्वमिति मन्ये त्वहं यतः।।

यद्यहं पठने तावद् अकरिष्यं परिश्रमम्।
सर्वः परिश्रमो व्यर्थमभविष्यन्न संशयः।।

## वैद्यराज ! नमस्तुभ्यम्

आयुर्विज्ञान-संस्थाने सूचनापट्टके यदा।
प्राचार्यस्तत्र छात्राणां ज्ञानार्थम् उदलेखयत्।।

महामहिमशाली मां राष्ट्रपतिमहोदयः।
नियुक्तमकरोदद्य पदे निजचिकित्सके।।

अन्येद्युस्तत्र चाऽधस्तात्कश्चिच्छात्रो लिलेखयत्।
प्रभो! दीर्घायुषं कृत्वा राष्ट्राध्यक्षं तु पाहि नः।।

## कथं वर्णयितुं क्षम्

परीक्षायां तु कस्याञ्चित् प्रश्न एष समागतः।
कश्मीरस्य प्रदेशस्य सौन्दर्यं वर्ण्यताम् इति।।

उत्तरपुस्तिकायां च छात्रेण लिखितं त्विदम्।
सौन्दर्यं वर्णनाऽतीतं कश्मीरस्याऽस्ति सर्वथा।।

## प्रारभ्य चोत्तमजनाः

विद्यालये भवति शान्तियुता परीक्षा,
प्रारब्धवान् अनुचितं ननु कर्म चैकः।
दृष्ट्वा तु छात्रमथ कक्षनिरीक्षकश्च,
ऊचे यदा किमपि तं प्रतिरोद्धुकामः।।

छात्रो जगाद् सहसा कुरु नैव विघ्नम्,
त्यक्ष्यामि नाऽनुकरणं च गुरो! यतोहि।
"विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः,
प्रारभ्य चोत्तमजना न परित्यजन्ति"।।
(वसन्ततिलका-वृत्तम्)

## सुकृतिनः परिपालयन्ति

मद्यं च मांसमथ दुर्वचनं तथैव,
त्याज्यं त्वयेति गुरुणा बहुधोपदिष्टः।
शिष्यो ब्रवीति न हि शक्यमिदं यतो हि,
"अङ्गीकृतं सुकृतिनः परिपालयन्ति"।।
(वसन्ततिलका-वृत्तम्)

## दिवा ब्रूते निशाटनः

षोडशीं सुन्दरीं दृष्ट्वा छात्रः सव्यंग्यम् उक्तवान्।
अहो! मध्याह्नकालेऽपि चन्द्रः समुदितः कथम्?।।

तस्य तद्वचनं श्रुत्वा षोडशी प्रत्युवाच यत्।
उलूकोऽयं दिनेऽप्यद्य कथं शब्दायते प्रभो!।।

 

## वने सीता कथं गता?

एकदा देवदत्तस्तु कक्षायां पाठयन् यदा।
छात्रान् उपस्थितांस्तत्र प्रश्नमेवम् उवाच यत्।।

त्यक्त्वा राजसुखं सर्वं नानाभोग्य-समन्वितम्।
रामेण सह सीताऽपि वद कस्माद् वनं गता?।।

गुरोस्तत्प्रश्नमाकर्ण्य स्तब्धे विद्यार्थि-मण्डले।
कश्चित् छात्रः समुत्थाय तत्रैवम् उत्तरं ददौ।।

एकयैव गृहे श्वश्र्वा निर्वाहो दुष्करो यदा।
त्रिश्वश्रूणां भयादेव मन्ये सीता पलायिता।।

## वर्त्तते हानिकारकम्

व्याकरणस्य कक्षायां पृष्टवान् गुरुरेकदा।
"धनं ददामि विप्राय" कारकम् इह किं भवेत्?।।

तस्य प्रश्नं समाकर्ण्य शिष्यः कश्चिदुवाच यत्।
गुरो! प्रतीयते वाक्ये कारकं हानिकारकम्।।



# पुलिसाऽपराधिविषयकाणि व्यंग्यानि

## वस्त्राणि केवलं पृथक्

चौर-पुलिसयोर्मध्ये को भेद इति मां वद? ।
प्रश्नमेनं समाकर्ण्य देवदत्तो ब्रवीति यत्।।

सामान्यं वर्त्तते सर्वम् एकैव भिन्नताऽस्तियत् ।
उभयोः परिधानानि भवन्तीह पृथक् पृथक्।।

## चलचित्रं पुरा दृष्टम्

पुलिसाऽधीक्षकस्तावत् निरीक्षकमुवाच यत्।
चौराऽनुगमनं कृत्वा निगृहीतः कथं न सः?॥

निरीक्षकस्तदा प्राहाऽनुगमनं कृतवानहम्।
परन्तु स प्रविष्टोऽभूत् चलचित्रालयं तदा॥

अथ तं निग्रहीतुं च ब्रूहि त्वमपि तत्क्षणम्।
चलचित्रगृहे तस्मिन् कथं नैव प्रविष्टवान्?॥

पुलिसाऽधीक्षके तस्मिन्नेवं पृष्टेऽथ सत्वरम्।
निरीक्षकस्तदा तत्र प्राह गंभीरया गिरा॥

चलचित्रमहं तत्तु बहुधा दृष्टवान् प्रभो!।
अतएव प्रविष्टोऽहं नैव चित्रालये तदा॥

## एषोऽस्ति नः परिश्रमः

एकदा देवदत्तस्य गृहे चौराः समागताः।
रज्जुभिर्बन्धनं कृत्वा पृच्छन्ति काऽस्ति ते धनम्?॥

सुसन्त्रस्तस्तथा भीतो देवदत्तस्तदैव स।
किंकर्त्तव्यविमूढात्मा चौरांस्तान् प्रत्युवाच यत्॥

नीयतां सकलं वित्तं यत्किमप्यत्र वर्तते।
मारयध्वं न मां किन्तु पीडयध्वं न वा तथा॥

तस्य तद्वचनं श्रुत्वा चौरास्ते सहसा तदा।
किञ्चिद् विहस्य संक्षुब्धा देवदत्तं ब्रुवन्ति यत्॥

कथमेतद् भवेत्? नाऽयं सम्भवो वर्त्तते यतः।
परिश्रमं विना नैव गृह्णीमः कस्यचिद् धनम्॥

## शेषं ते प्रतिवेशिनाम्

गृहस्वामी यदा चौरं निशि संलक्ष्य चाऽऽह यत्।
त्यक्त्वा सर्वाणि वस्तूनि पलायस्व गृहाद् इतः।।

तच्छ्रुत्वा चौर ऊचे यत् त्यजेयं सकलं कथम्?
तव त्रीण्येव वस्तूनि शेषं ते प्रतिवेशिनाम्।।

## नैवाऽवरोधकं यन्त्रम्

एकदा पुलिसः कश्चित् मोटरयानचालकम्।
सायं प्रकाशहीनं तद् यानं दृष्टा तमाह यत्।।

प्रकाशस्य व्यवस्था तु नास्ति यानमुखे तव।
अत एवाऽपराधीत्वं यानं रुन्द्ध्यभियोजितः।।

तस्य तद्वचनं श्रुत्वा यानचालक आह् यत्।
यानं न शक्यते रोद्धुं कृपया क्षम्यतां यतः।।

मम मोटरयानेऽस्मिन् दुःखमेतद् हि साम्प्रतम्।
अवरोधकयन्त्रस्य व्यवस्थाऽपि न वर्तते।।

## घोटकः किं पठिष्यति?

थाना-स्थानमुपागम्य तांगायानस्य चालकः।
उवाच यन्न जाने क्व विलुप्तस्तस्य घोटकः।।

तस्यतद्वचनंश्रुत्वा थानाऽध्यक्षो ब्रवीतियत्।
त्वं समाचारपत्रेषु विज्ञप्तिं कुरुषे न किम्?।।

तस्योपदेशमाकर्ण्य तांगाचालक आह यत्।
निरक्षरः परं श्रीमन्! वर्त्तते मे तुरङ्गमः।।

## अवशिष्टं पुरातनम्

स्वामी भृत्यम् उवाचेदं किं ते चौरा गृहात् पुनः।
मम सर्वाणि वस्तूनि नीत्वा रात्रौ पलायिताः?।।

स्वामिनो वचनं श्रुत्वा भृत्यः प्राह नताऽऽननः।
पुरातनानि वस्त्राणि स्वामिन्! त्यक्तानि तैः परम्।।

## निःशुल्कं शिक्ष्यते कथम्?

थानाऽध्यक्षो यदा चौरं पृष्टवान् यत् कथं त्वया।
सुनिबद्धं कपाटं तत् शीघ्रम् उद्घाटितं निशि?।।

तस्य तत्प्रश्नमाकर्ण्य चौरोऽसौ प्रत्युवाच यत्।
प्रयासाऽभ्याससंयुक्ता गुरुसेवाभिरर्जिता।।

इयं फलवती विद्या मया यत्नात् परिष्कृता।
कथं सा भवते स्वामिन्! निःशुल्कं शिक्षयिष्यते।।

## सदाचारे प्रमाणं तत्

न्यायाधीशो यदाऽपृच्छद् अभियुक्तमिदं हि यत्।
किं निजसच्चरित्रस्य प्रमाणं दातुमर्हसि?।।

तच्छ्रुत्वा वचनं तस्याऽभियुक्तो निजगाद यत्।
आम्, श्रीमन्! तत्प्रमाणेऽयं थानाध्यक्षस्तु वर्त्तते।।

तस्य तद्वाचमाकर्ण्य थानाध्यक्षो ब्रवीति यत्।
नो श्रीमन्! नैव जानेऽहमभियुक्तमिमं क्वचित्।।

थानाध्यक्षवचः श्रुत्वाऽभियुक्तः पुनरुक्तवान्।
विनीतभावपन्नो न्यायाधीशमिदं वचः।।

अहं हि दशभिर्वर्षैर्वसामि नगरे त्विह ।
थानाध्यक्षो न मां वेत्ति प्रमाणं किं ततोऽधिकम् ?॥



## श्रीमान् श्यालो महोदयः

अभियुक्तो यदा कश्चित् कारागारं प्रविष्टवान् ।
कारागारस्य चाऽध्यक्षस्तं विहस्य जगाद यत् ॥

मन्ये त्वम्प्रथमं वारम् आगतः श्वशुरालये ।
स्वागतं भद्र! ते नित्यं यथेच्छं वस साम्प्रतम् ॥

काराऽध्यक्षस्य तद्वाचं परिहासप्रियस्य वै ।
श्रुत्वा चौरोऽपि तत्रैवं प्रत्युवाच स्मिताननः ॥

इतः पूर्वमहं प्राप्तो बहुधा श्वशुरालयम् ।
परन्तु प्रथमं वारं दृष्टः श्यालो महोदयः ॥



# पितापुत्रविषयकाणि व्यंग्यानि

## योत्स्यामि तदनन्तरम्

पिता पुत्रमुवाचेदं सदा त्वं युध्यसे पुरा।
क्षमां च याचसे पश्चात् नेदं श्रेयस्करं मतम्।।

तच्छ्रुत्वा सप्तवर्षीयः पुत्रः स तातमाह यत्।
अस्तु पूर्वं क्षमायाच्ञा युद्धं च तदनन्तरम्।।

## अन्त्येष्ट्यां प्रस्थितस्तव

कार्यालये समागत्य वृद्धः कश्चिदथैकदा।
जिज्ञासुः पृष्टवान् एवं तत्रस्थम् अधिकारिणम्।।

मत्पौत्रो देवदत्ताख्य इह कार्यरतोऽस्ति यः।
तं सम्मेलितुमिच्छामि तन्मां निर्दिशतां भवान्।।

तस्य तद्वचनं श्रुत्वाऽधिकारी विस्मिताऽऽननः।
मन्दं विहस्य तं वृद्धं वचनं प्रत्युवाच यत्।।

स्वस्य पितामहस्यैव दुःखम् अन्त्येष्टिकर्मणि।
नीत्वाऽवकाशमद्यैव देवदत्तो गृहं गतः।।

## ज्येष्ठानाम् उपयोगिता

एकदा बालकः कश्चित् सखायम् एवमाह यत्।
ज्येष्ठा अपि निमन्त्र्यन्ते कथं जन्मोत्सवे हि नः?।।

तस्य तत्प्रश्नमाकर्ण्य सखा किंचिद्विचारयन्।
मन्दं मन्दं विहस्यैवं मित्रं स प्रत्युवाच यत्।।

उपहारा महामूल्या ज्येष्ठा एव हि नः सदा।
प्रदातुं शक्नुवन्त्यत्र तस्मात्तेऽपि निमन्त्रिताः।।

## पुत्रवद् वर्त्तते भवान्

एकदा देवदत्तस्य तनयस्तातम् आह यत्।
विवाहाऽनन्तरं किं मे पुत्रवद् भविता भवान्?।।

पुत्रस्य वचनं श्रुत्वा देवदत्तः सुविस्मितः।
पृष्टवान् यदहं तावत् पुत्रकल्पः कथं तव?।।

•

पितुः शङ्कां समाकर्ण्य सूनुरस्य ब्रवीति यत्।
भवांस्तु शास्त्रमर्मज्ञो नीतिवाक्य-समर्थकः।।

न जानीते किमेतद् यद् विवाहाऽनन्तरं पितः! ।
भवत्कृते तु भार्या मे परदारा स्मृता भवेत्।।

"मातृवत् परदारेषु" नीतिशास्त्रेषु यद्वचः।
ततस्तु पुत्रवत् किन्न वर्त्तते मत्कृते भवान्?।।

## भवान् कस्मै प्रयच्छति?

एकदा देवदत्तस्तु दशवर्षीयम् आत्मजम्।
पृष्टवान् यद् यदा ज्येष्ठो भूत्वा प्राप्य नियोजनम्।।

वेतनं चैव मासान्ते प्राप्स्यते तद् धनं तदा।
पत्न्यै दास्यसि वा ब्रूहि जनन्यै वा प्रदास्यसि?।।

तच्छ्रुत्वा तस्य पुत्रस्तु पितरं प्रत्युवाच यत्।
किं भवान् वेतनं स्वीयं पितामह्यै प्रयच्छति?।।

## निष्क्रियो योजनामन्त्री

एकदा यज्ञदत्तस्तु क्षुब्धः स्वतनयम्प्रति।
देवदत्तमुवाचैवं तस्याऽऽचरणभिङ्गयन्।।

विचारमेव मत्पुत्रः केवलं कुरुते सदा।
कार्यं न कुरुते किञ्चित् सदोद्यमपराङ्मुखः।।

तस्य तद्वचनं श्रुत्वा देवदत्तः स्मिताऽऽननः।
मन्दं मन्दं विहस्यैवं यज्ञदत्तं जगाद यत्।।

तत्र चिन्ता न कर्त्तव्या भविष्यत्समये स वै।
देशस्य योजनामन्त्री भवेदिति न संशयः।।

## भवते रासभस्त्वहम्

एकदा देवदत्तस्य जनकस्तम् उवाच यत्।
मया तु कथितं यत्त्वं गर्दभद्वयम् आनय।।

आनीतवान् कथं चैकमेव त्वं गर्दभं परम्।
इत्यहं ज्ञातुमिच्छामि कारणं ब्रूहि तस्य माम्।।

पितुस्तद्वचनं श्रुत्वा देवदत्त उवाच यत्।
भवानेव तु मां प्रायो गर्दभोऽसीति भाषते।।

अतस्तदनुचिन्त्याऽहम् एकमानीतवान् यतः।
एकस्तु स्वयमेवाऽहं रासभत्वेन संस्मृतः।।

## माता मे बहु भाषते

एकदा दशवर्षीयः पुत्रो जनकमाह यत्।
विद्यालये भवत्यद्य भाषणे प्रतियोगिता।।

अतएव भवानद्य सुन्दरं लघु भाषणम्।
लिखित्वा कृपया मह्यं भाषणार्थं प्रयच्छतु।।

तस्य तद्वाक्यमाकर्ण्य पिता पुत्रमुवाच यत्।
तदर्थं मातरं ब्रूहि भाषणे निपुणाऽस्ति सा।।

तच्छ्रुत्वा पुत्र ऊचे यत् नहि घण्टाद्वयात्मकम्।
भाषणम् इष्यते मह्यं किन्तु षट्मिनटात्मकम्।।

## शुद्धं ददाति गौर्दुग्धम्

एकदा देवदत्तस्तु तनयम्प्रश्नमाह यत्।
गो-गोपालकयोर्मध्ये कः प्रशस्यतरः स्मृतः?॥

पितुस्तत्प्रश्नमाकर्ण्य दशवर्षीय आत्मजः।
किञ्चिद् विचारयंस्तत्र पितरम्प्रत्युवाच यत्।

पशुर्यद्यपि गौरस्ति किन्तु सा श्रेयसी यतः।
शुद्धं ददाति गौ र्दुग्धं गोपस्तु जलमिश्रितम्॥

## उपनेत्रेण पश्यामि

सोपनेत्रं शयानं वै दृष्ट्वा वृद्धं पितामहम्।
पौत्रः प्राहोपनेत्रं तद् उत्तार्य सुप्यतामिति।

पौत्रम् ऊचे तदा वृद्धो मम नेत्रे सुदुर्बले।
उपनेत्रं विना स्वप्नाः शक्यन्ते नाऽवलोकितुम्॥

## न कथं सदृशः पितुः

भवांस्तु बहुविख्यातः कविः साहित्यसर्जकः।
पुत्रश्च भवतामेष कथं नाऽस्ति भवादृशः?॥

प्रश्नमेनं समाकर्ण्य देवदत्तः स्मिताननः।
प्रश्नकर्त्तारमालक्ष्य वाक्यमेवम् उवाच यत्॥

पुत्रोऽयं मम संस्कारै र्नाऽभूत् प्रभावितो यतः।
जन्माऽनन्तरमेतस्य प्रसिद्धिरर्जिता मया॥

## वार्धक्ये नश्यति स्मृतिः

विरतं कारयन् पौत्रम् असत्यवचनात् तथा।
पितामहोऽब्रवीदेवं प्रेरयन् सत्यभाषणे।।

आयुर्व्यतीतमेतावत् न च किञ्चित् स्मरामियत्।
कदाचिज्जीवने चाऽस्मिन् असत्यं भाषितं मया।।

पितामहस्य तद्वाक्यं श्रुत्वा पौत्रस्तु सस्मितः।
अत्यन्तं विनयापन्नः पितामहम् उवाच यत्।।

नैवाऽऽश्चर्यं किमप्यत्र यतो दीर्घायुषि स्मृतिः।
प्रायशः क्षीणतां याति वृद्धानां तु भवादृशाम्।।

## स्वतन्त्रे भारते जातः

एकदा देवदत्तः स्वम् आज्ञोल्लङ्घन-तत्परम्।
पुत्रं द्वादशवर्षीयं क्षुब्ध एवमुवाच यत्।।

यदाऽहं त्वादृशोऽभूवम् पित्रोरज्ञां निरन्तरम्।
पालने तत्परश्चाऽऽसम् भ्रातुराज्ञां तथैव च।।

तादृशी न प्रवृत्तिस्ते न चाऽऽज्ञामिह कस्यचित्।
त्वं पालयसि किं चाऽत्र कारणं ब्रूहि पुत्रक!।।

पितुस्तद्वचनं श्रुत्वा देवदत्तसुतस्तदा।
मन्दं विहस्य तातं स्वं वाक्यमेवम् उवाच यत्।।

सम्पीडिते पराधीने संजातो भारते भवान्।
स्वतन्त्रे भारते चाऽहं जात इत्येव कारणम्।।

## जंगले नापिताऽभावः

एकदा देवदत्तस्तु तनयम्प्रश्नमाह यत्।
भल्लूकस्य कथं देहे दीर्घाः केशाः प्रलम्बिताः?।।

तच्छ्रुत्वा सप्तवर्षीयः पुत्रस्तम्प्रत्युवाच यत्।
जङ्गले नापितो नाऽस्ति तस्माद् ऋक्षोऽस्ति केशवान्।।

## शिक्षयिष्यामि चात्मजान्

विवाहः सर्वदुःखानां मूलमाहुरतस्त्वया।
विवाहो नैव कर्त्तव्य एवम् ऊचे सुतं पिता।।

आकर्ण्य वचनं चैतत् पितृभक्तो नताननः।
तनयः प्रत्युवाचेदं तदा गम्भीरया गिरा।।

विवाहं न करिष्यामि कदाचिदपि जीवने।
आत्मजानपि दास्यामि शिक्षामेनां सुदुर्लभाम्।।



# व्यापार-भृत्यतादिविषयकाणि व्यंग्यानि

## ब्रह्मचारी सदा सुखी

पुष्प-स्तबक-विक्रेता देवदत्तम् उवाच यत्।
क्रीणातु कृपया पुष्पं प्रेमिकायै भवानिदम्।।

तस्य तद्वचनं श्रुत्वा देवदत्तो ब्रवीति यत्।
न काऽपि प्रेमिका मेऽस्ति किमर्थं तन्नयाम्यहम्?।।

ततः पुष्पस्य विक्रेता साग्रहं तमुवाच यत्।
अस्तु तर्हि स्वभार्यायै! पुष्पगुच्छं नयेद् भवान्।।

देवदत्तस्तदा ब्रूते नैव नेष्याम्यहं यतः।
अविवाहित एवाऽस्मि सखे! साम्प्रतमप्यहम्।।

तच्छ्रुत्वा पुष्पविक्रेता दीर्घं निःश्वस्य सत्वरम्।
सम्बोधयन् देवदत्तम् एवं वाक्यमुवाच यत्।।

त्वमेव पुरुषश्चाऽसि संसारे सर्वतोऽधिकः।
प्रसन्नः सुखसम्पन्नः सौभाग्य-श्री-समन्वितः।।

अत एव हि सस्नेहं पुष्पस्य स्तबकं त्विदम्।
निःशुल्कमेव हे मित्र! तुभ्यमेव समर्पये।।

# वेतनं कस्य लभ्यते?

अभियन्ता तु वै कश्चित् दक्षः कार्येषु सर्वदा।
कार्यालये च गत्वा स स्वामिनं स्वनियोजकम्॥

ययाचे वेतने वृद्धिं यदा स्वामी तदैव तम्।
विहसन्नभियन्तारम् एवं प्रत्युक्तवान् मुहुः॥

षट् पुत्राणां पिता श्रीमान् देवदत्तस्तु वर्त्तते।
ततश्चाऽप्यधिकं किन्तु वेतनं लभते भवान्॥

नियोजकस्य तद्वाक्यम् आकर्ण्य तत्क्षणं तदा।
अभियन्ता सुदक्षः स स्वामिनं प्रत्युवाच यत्॥

कार्यालये समुत्पादः क्रियते तस्य वेतनम्।
अस्माभिः प्राप्यते यद् वा यः समुत्पादितो गृहे?॥

# कार्यालयेऽपि निष्क्रियाः

राज्यकार्यालयस्यैकः कर्मचारी स्वके गृहे।
चायपानं प्रकुर्वाणः पत्रिकापठने रतः॥

बहुकाले व्यतीते च तस्य पत्नी जगाद् यत्।
गमिष्यति भवान् अद्य किं न कार्यालयेऽधुना?॥

तस्यास्तद् वचनं श्रुत्वा विस्मितः स उवाच यत्।
मया तु ज्ञातमेतद् यत् स्थितः कार्यालयेऽस्म्यहम्॥

## नियुक्तौ संस्तुतिर्मुख्या

साक्षात्कारं चतुर्वारं तस्मिन्नेव पदे यदा।
दत्त्वा श्रीदेवदत्तस्तु पञ्चमं वारमागतः।।

चयनसमितेश्चाऽपि सदस्यैरपि तत्र च।
तेषामेष हि प्रश्नानाम् आरम्भः प्रकृतः पुनः।।

देशस्य राजधानी क्व? कश्चित्तं पृष्टवान् यदा।
देवदत्तस्तु निश्चिन्तः ''प्रयाग'' इति चोक्तवान्।।

तच्छ्रुत्वा ते सदस्याश्च सहसा तं ब्रुवन्ति यत्।
राजधानीमपि त्वं तु देशस्य नैव वेत्सि किम्?।।

तत्प्रश्ने देवदत्तस्तु सदस्यान् निजगाद यत्।
किं ''दिल्ली' कथनेनाऽत्र नियुक्तिर्भविता मम?।।

पूर्वमपि चतुर्वारं साक्षात्कारे मया सदा।
दिल्लीति कथितं किन्तु न साफल्यमवाप्तवान्।।

## पत्नीभक्तस्तथैवाऽहम्

भृत्यस्तु स्वामिनम्प्राह मम पत्नी जगाद यत्।
याचितव्या त्वया वृद्धिर्वेतने स्वामिनः पुरः।।

तस्य तद्वचनं श्रुत्वा स्वामी तम्प्रत्युवाच यत्।
अहं चाऽप्यत्र सन्दर्भे पत्नीं प्रक्ष्यामि स्वगृहे।।

## महत्त्वं ते तदा मतम्

क्वचित् चायालये गत्वा देवदत्तस्त्वथैकदा।
एवं चायाऽऽपणस्याऽथ स्वामिनं वाक्यमाह यत्।।

नीत्वा तु रूप्यकं चायं कोऽपि पाययितुं क्षमः।
पायय त्वं विना मूल्यं वैशिष्ट्यं ते तदा मतम्।।

तस्य तद्वचनं श्रुत्वा स्वामी चायालयस्य सः।
कपपात्रं तदा रिक्तं निधाय तत्पुरोऽब्रवीत्।।

सचायं कपपात्रं तु सर्व एव पिबन्ति वै।
पिब त्वं रिक्तपात्रेण महत्त्वं तेऽपि तन्मतम्।।

## कुलीना ददते स्वयम्

भृत्यां तु स्वामिनी प्राह मासेऽस्मिन् किं च कारणम्।
पारिश्रमिकमद्याऽपि स्वकीयं नैव याचितम्?।।

तस्यास्तद्वचनं श्रुत्वा सेविका प्रत्युवाच यत्।
कुलीनां महिलां नाऽहं याचे वृत्तिधनं क्वचित्।।

तस्यास्तदुत्तरं श्रुत्वा स्वामिनी प्रत्युवाच यत्।
यदि कोऽपि न ते दद्यात् तदा त्वं किं करिष्यसि?।।

तच्छ्रुत्वा सेविका प्राह सा कुलीना न वर्त्तते।
इति निश्चित्य तां चाऽहं याचे वृत्तिधनं तदा।।

## चतुरोऽहं बली तथा

एकदा द्वारपालानां साक्षात्कारे नियोजकः।
निरीक्ष्य निपुणं चैकं प्रत्याशिनमुवाच यत्।।

दौवारिकाणां वृत्त्यर्थं सबलाश्चतुरास्तथा।
अपेक्षिता युवानो मे किं त्वं योग्यः प्रवर्त्तसे?।।

तस्य तद्वचनं श्रुत्वा प्रत्याशी स जगाद यत्।
चातुर्ये सबलत्वे च योग्योऽहं सर्वथा यतः।।

बहिस्तिष्ठन्ति शतशः साक्षात्काराय मानवाः।
तान् सर्वान् निरपास्याऽहं प्रथमोऽत्र समागतः।।

## विज्ञापने तु नैपुण्यम्

काच-ग्लासस्य निर्मात्रा केनचिद् एवमेकदा।
स्वकीय-ग्लास-सन्दर्भे विज्ञापनमकारि यत्।।

अस्माकं कार्यशालायां ग्लासं यत्काचनिर्मितम्।
कठोरं तत् तथा चाऽस्ति सुदृढं चाऽपितत्तथा।।

पञ्चाशत् फुटपर्यन्ताद् उपरिष्टादपि क्वचित्।
कोऽपि तत्पातयेद् भूमौ तदापि ध्रुवमेव तत्।।

फुटम् एकोनपञ्चाशत् पर्यन्तं कथमप्यहो!।
नैव भग्नं भवत्येतत् इति संघोषणा मम।।

## प्रदातुः स्थितिसूचकः

एकदा भिक्षुकः कश्चित् देवदत्तमुवाच यत्।
ददातु कृपया मह्यं दश कार्षापणान् प्रभो!।।

तस्य तद्वचनं श्रुत्वा देवदत्तस्तमब्रवीत्।
दश कार्षापणैः किं स्यादधिकं किं न याचसे?।।

तच्छ्रुत्वा याचकस्तत्र देवदत्तं जगाद यत्।
दायकस्य स्थितिं दृष्ट्वा याचना मे प्रवर्त्तते।।

## वधूः पूर्वं प्रदर्श्यताम्

एकदा देवदत्तस्तु कस्मिंश्चिदापणे स्वयम्।
विशिष्टं सूचनापट्टं दृष्टवान् यत्र चाऽङ्कितम्।।

"वैवाहिकानां वस्तूनां सर्वेषामेव विक्रयः।
विधीयतेऽत्र" दृष्ट्वा तत् तत्र स समुपागतः।।

आपणाऽभिमुखं दृष्ट्वा तमापणिक उक्तवान्।
उष्णीषं माल्यकं यद् वा सज्ञायुक्तावुपानहौ।।

विशिष्टं कुरतावस्त्रम् अश्वं वा सुविभूषितम्।
किं भवन्तोऽत्र वाञ्छन्ति? कृपया कथयन्तु माम्।।

तस्य तद्वचनं श्रुत्वा देवदत्तो ब्रवीति यत्।
त्वं तु पूर्वं वधूमेव कृपया दर्शयस्व माम्।।

## प्रारुत्थापयेद् भृत्याम्

देवदत्तगृहे कश्चित् भाटकाऽऽवासवान् नवः।
यदा समागतस्तं च देवदत्त उवाच यत्।।

सेविका मम प्रातस्त्वां प्रत्यहं पञ्चवादने।
उत्थापयेत् किमेतत् त्वं यदि चेच्छसि मां वद।।

तच्छ्रुत्वा भाटकाऽऽवासी देवदत्तमुवाच यत्।
न हि भो! स्वयमेवाऽहं जागर्मि पञ्चवादने।।

तस्योत्तरं समाकर्ण्य देवदत्तो ब्रवीति यत्।
यद्येवं तर्हि भृत्यां मे प्रातरुत्थापयेद् भवान्।।

## स्वविभागेऽप्यविश्वासः

डाक-तार विभागस्य पत्र-वितरको यदा।
त्रिंशद्वर्षस्य पश्चात् स सेवानिवृत्तिमाप्तवान्।।

तदा तस्य विभागस्था अधिकारिण एकदा।
सेवासमाप्तिमालक्ष्य समारोहे प्रवर्त्तिते।।

तमाहुर्यत्त्वमेकं स्वं कथयाऽनुभवं निजम्।
विशिष्टा काचिदिच्छा वा नः पुरस्तान्निवेदय।।

तेषां तद्वचनं श्रुत्वा पत्र-वितरकस्तदा।
विरम्य क्षणमुद्विग्न एवं वचनमाह यत्।।

भवन्तः कृपया मह्यं डाक- द्वारा कदापि न।
सेवा-निवृत्तिवित्तं मे प्रेषयन्त्विति कामना।।

## परस्परं भावयन्तः

सूचनापट्टके तावत् स्वामिना भोजनालये।
द्वारस्थे सूचना चैषा ग्राहकान् प्रति लेखिता।।

सम्मान्याग्राहकाः! यूयंयदि नाऽत्राऽऽगमिष्यथ।
बुभुक्षितौ भविष्यावो ध्रुवम् आवाम् उभावपि।।

## गुटिकार्थं स प्रेषितः

एकदा देवदत्तस्तु निशायां दशवादने।
अत्यन्तं निद्रया ग्रस्तो नयने स्वे परिमृजन्।।

भृत्यं प्रतीक्षमाणश्च जृम्भमाणो, मुहुर्मुहुः।
पत्नीं स पृष्टवान् यत् किं भृत्यो हट्टात्निवृत्तवान्?।।

तस्य तत् प्रश्नमाकर्ण्य भार्या तं प्रत्युवाच यत्।
भृत्यस्तु न समायातः किमर्थं तं प्रतीक्षसे?।।

भार्याया वचनं श्रुत्वा देवदत्तो ब्रवीति यत्।
निद्राया गुटिकार्थं वै स हट्टे प्रेषितो मया।।

## गंगामातुरियं कृपा

ददाति तव गौ दुग्धं केवलं लीटरद्वयम्।
विक्रीणासि कथं तावत् तदा त्वं लीटरत्रयम्?।।

क्रेतुः प्रश्नमिमं श्रुत्वा गोपालः प्रत्युवाच यत्।
गंगामातुः कृपा सर्वा तत्प्रभावेण सिध्यति।।

## ऋणं प्रति ददामि ते

यदैकदा सखायौ तु गच्छतः स्म क्वचित् तदा।
निर्जने कानने केचिद् दस्यवः समुपागताः।।

दस्यून् वीक्ष्य सखा त्वेको योऽधमर्णो बभूव वै।
उत्तमर्णाय मित्राय तत्रैव सहयात्रिणे।।

दत्त्वा पञ्चशतं तस्मै रूप्याणि स तदाऽब्रवीत्।
सखे! यत्तु पुरा नीतं धनं प्रतिददामि तत्।।

## हानिस्ते पूरयिष्यते

ग्राहकः कश्चिदागत्य पत्रकार्यालये यदा।
प्राह सम्पादकं क्रुद्धस्तत्र साक्रोशया गिरा।।

पत्रिका प्रेष्यते यस्मिन् सङ्केते तत्र नाम्नि मे।
द्विवेदो लिख्यते नित्यं त्रिवेदश्च भवाम्यहम्।।

एवम् एकस्य वेदस्य प्रतिमासं तु वर्त्तते।
या हानिस्तस्य दुःखं तु न भवान् ज्ञातुमर्हति।।

ग्राहकस्य वचः श्रुत्वा सम्पादक उवाच यत्।
नाऽग्रे हानिर्भवेद् एतद् अवधास्याम्यहं परम्।।

या हानिरेकवेदस्य पुराऽभूद् अथ तत्कृते।
तव नाम्नि चतुर्वेदं लिखित्वा पूरयिष्यते।।

## पुरा विकासकार्येषु

कश्चिन्नरः कार्यकर्त्ता परिवार-नियोजने।
दशानां तनयानां तु जनकः समवर्त्तत।।

यदा कश्चिदपृच्छद् यत् कथं ते वंशवर्धनम्।
नियोजनविभागेऽपि भूत्वा तावदिदं महत्?।।

तदा स प्रत्युवाचैवम् इतः पूर्वमहं सखे!।
विकासस्य विभागेषु नियुक्तः सर्वदाऽभवम्।।

## यथासंख्यं यथाक्रमम्

पूर्वं साधारणं पत्रं तत्पश्चात् तारपत्रकम्।
प्राप्याऽऽश्चर्यं न कर्त्तव्यं श्रूयतामत्र कारणम्।।

पाणिनेरस्ति निर्देशो यथासंख्यं यथाक्रमम्।
डाक-तार विभागस्य प्रवृत्तिरपि वै तथा।।

प्रमाणं पाणिनिं कृत्वा कार्यमेष करोत्यतः।
पूर्वमायान्ति पत्राणि तत्पश्चात् तारपत्रकम्।।



# यात्रा-यानादिविषयकाणि व्यंग्यानि

## दुर्लभाः सत्ययात्रिणः

ट्रेनस्य टिकटं नीत्वा कश्चिद् यात्री यदा पुनः।
टिकटदायकस्याऽग्रे गवाक्षे समुपागमत्॥

तमुवाच स यन्मे त्वं गणयित्वा न दत्तवान्।
रूप्यकाणि ततश्चाऽहं पुनरत्र समागतः॥

यात्रिणो वचनं श्रुत्वा टिकटदायकोऽब्रवीत्।
टिकट-ग्रहणे काले वाच्यमासीदिदं त्वया॥

परं बहुविलम्बेन त्वमिहाऽसि समागतः।
तस्मान्नैवाधुना किञ्चिद् भवितुमिह शक्यते॥

तस्य तद्वचनं श्रुत्वा यात्री स तदनन्तरम्।
टिकटदायकं तं च वाक्यमेवम् उवाच यत्॥

अस्तु तर्हि यदेतत् त्वं पञ्चाशद् रूप्यकाणि मे।
अधिकं दत्तवान् बन्धो! तन्मयैव सुरक्ष्यते॥

## सौकर्यं याचने भवेत्

एकदा भिक्षुकः कश्चित् सखायं भिक्षुमाह यत्।
यति ते लाटरी-लाभो भवेत् तत्किं करिष्यसि?।।

तस्य तद्वचनं श्रुत्वा सखा तम्प्रत्युवाच यत्।
एकं स्कूटरयानं तु प्रथमं क्रेष्यते यतः।।

पदातिना महत्कष्टं भिक्षायामधिगम्यते।
स्कूटरेण तु सौकर्यं याचने सम्भविष्यति।।

## दोषस्तव विभागस्य

टिकट-निरीक्षकः कश्चित् यदा ट्रेने समागते।
कस्यचिद् यात्रिणो दृष्ट्वा टिकटं चैवमाह यत्।।

टिकटं कलकत्तायास्तवेदं वर्त्तते तथा।
मुम्बई-गामिनि ट्रेने कथं तिष्ठसि मां वद।।

तस्य तत्प्रश्नमाकर्ण्य यात्री स प्रत्युवाच यत्।
परं ममाऽत्र को दोषः कृपया ट्रेनचालकम्।।

भवान् प्रष्टुं हि शक्नोति न किन्तु पृच्छ्यते यतः।
भवदीय-विभागस्य कर्मचारी स वर्त्तते।।

## चित्तौड़-दुर्ग आगतः

बसयाने तु कस्मिंश्चित् मद्यपः पुरुषः क्वचित्।
महाराणा - प्रतापोऽहम् इत्येवं घोषयन् निजम्।।

सर्वान् स यात्रिणस्तत्र समुद्विग्नान् यदाऽकरोत्।
प्रमत्त-भावमापन्नो महाराणात्वमाभजन्।।

त्रस्तो बहुविधस्तत्र यानस्य परिचालकः।
किञ्चिद् विचार्य तत्पार्श्वे सहसा प्राह सस्मितः।।

अहो! चित्तौड़-दुर्गोऽयं समायातः समीपतः।
उत्तिष्ठ बसयानात्त्वम् अवताराय सत्वरम्।।

तस्य तां घोषणां श्रुत्वा प्रहृष्टः स तु मद्यपः।
जनान् सर्वान् नमस्कृत्य बसयानाद् अवातरत्।।

## अहं खाद्यनिरीक्षकः

विश्वयात्रां प्रकुर्वाण एकदा देवदत्तकः।
गतो भ्रान्तिवशादेव प्रदेशे नरभक्षिणाम्।।

सहसैव तदा तत्र कश्चिदागत्य मानवः।
स्प्रष्टुमारब्धवान् तस्य शरीराङ्गं यतस्ततः।।

विस्मितो देवदत्तस्तद्विलोक्य क्षुब्धमानसः।
पुरुषं तमवोचद् यत् त्वमेवं कुरुषे कथम्?।।

तच्छ्रुत्वा स नरो ब्रूते मूढ़! तूष्णीं भवेः यतः।
अस्मिन् क्षेत्रे नियुक्तोऽहं मुख्यः खाद्यनिरीक्षकः।।

## सुखेन शयनं तदा

एकदा यज्ञदत्तस्तु देवदत्तमुवाच यत्।
साम्प्रतं प्रत्यहं स्वप्नम् एकं पश्याम्यहं निशि।।

कण्टका बहवस्तीक्ष्णा विचित्रा मम पादयोः।
प्रविशन्ति न जाने ते कुतस्त्विति तु दुःखदम्।।

तस्य वाचं समाकर्ण्य देवदत्तोऽपि दुःखितः।
गंभीरया गिरा तत्र यज्ञदत्तमुवाच यत्।।

यद्येवं तर्हि रात्रौ त्वं परिधाय स्वपादयोः।
उपानहौ स्वकीयौ च सुखेन शयनं कुरु॥

## प्रमाणत्वे त्वमेव नः

देशयात्रां प्रकुर्वाण देवदत्तस्त्वथैकदा।
गतवान् स क्वचिद् द्रष्टुं प्रसिद्धं संग्रहालयम्॥

पथप्रदर्शकस्तावत् कश्चित् तत्संग्रहालये।
प्राचीनां दर्शयन् मूर्त्तिम् एकां प्रस्तरनिर्मिताम्॥

तत्रस्थान् दर्शकान् सर्वान् सोत्सुकान् समुवाच यत्।
सहस्रवर्षप्राचीना मूर्त्तिरेषा तु विद्यते॥

तस्य तद्वचनं श्रुत्वा देवदत्तो जगाद यत्।
न हि भो! नैवमस्त्यैतत् मूर्त्तिरेषा तु साम्प्रतम्॥

पञ्चाधिक-सहस्त्रं हि वर्षाणि धारयत्यहो!।
प्राचीनत्वे तदस्यास्तु सत्यं मद्वचनं भवेत्॥

देवदत्तवचः श्रुत्वा विस्मितः स प्रदर्शकः।
पृष्टवान् कुत एतावत् सत्यं ज्ञानं तवाऽऽगतम्?॥

देवदत्तस्तदा ब्रूते पञ्चाऽब्दपूर्वमत्र माम्।
त्वयैवोक्तम् इयं मूर्त्तिः सहस्राऽब्दपुरातनी॥

## वञ्चका अपि यात्रिणः

यात्री तु स्टेशने कश्चिद् अपरिचित एकदा।
कृतज्ञभावमापन्नो देवदत्तं ब्रवीति यत्॥

भवानेवैकदा मह्यं दत्त्वा रूप्याणि वै शतम्।
साहाय्यं कृतवान् नैतत् कदापि विस्मराम्यहम्॥

 

देवदत्तस्तदा ब्रूते नाऽहं सद्य स्मरामि तत्।
अस्तु, किं तानि रूप्याणि प्रत्यावर्त्तितुम् आगतः?॥

तच्छ्रुत्वा स नरो ब्रूते नैवेदं विद्यते परम्।
शतम् अन्यं ग्रहीतुं हि पुनरस्मि समागतः॥

## कथं कष्टं प्रदित्सति?

जन-सम्मर्दयुक्ते तु रेलयानेऽथ चैकदा।
कश्चिदारोढुकामो वै यात्री यत्नं यदाऽकरोत्॥

याने स्थितस्तदा तत्र देवदत्तो ब्रवीति यत्।
नेह स्थानं किमप्यस्ति कृपयाऽन्यत्र गम्यताम्॥

तस्य तद्वचनं श्रुत्वा यात्री स प्रत्युवाच यत्।
नैवोपवेष्टुम् इच्छामि पद्भ्यां स्थातुं हि कामये॥

तदुत्तरं समाकर्ण्य यात्रिणस्तस्य वै तदा।
क्षुब्धो देवदत्तस्तु पुनरेवम् उवाच यत्॥

यद्येवं तर्हि किं नैव बहिरेव हि तिष्ठसि।
कथं याने समारुह्य नः कष्टं दित्सते भवान्?॥

## द्वितीयं नैव जानामि

प्रसिद्धौ द्वौ कवी तावद् यात्रायाम् एकदा यदा।
सहसा संगतौ जातौ तदैकस्त्वन्यमाह यत्॥

भवान् हि मन्यते कौचित् देशस्याऽस्य महाकवी?।
इत्यहं ज्ञातुमिच्छामि भवदीयमुखेन वै॥

तच्छ्रुत्वा वचनं तस्य प्रथमस्त्वन्यमाह यत्।
एकस्तु स्वयमेवाऽस्मि परम् अन्यं न वेद्म्यहम्॥



# विभिन्नविषयकाणि व्यंग्यानि

## सर्वव्यापक ईश्वरः

एकदा देवदत्तस्तु सश्रद्धं सस्मिताननः।
मन्दिरे समुपागम्य पुजारिणमुवाच यत्॥

समये पूजनस्याऽथ प्रार्थनासमयेऽपि वा।
धूमपानमहं ब्रूहि कर्त्तुं शक्नोमि वा न वा?॥

तस्य तत्प्रश्नमाकर्ण्य पुजारी प्रत्युवाच यत्।
किमेवम् ईश्वरस्य त्वम् अपमानं चिकीर्षसि?॥

देवदत्तस्तदा ब्रूते धूमपानं प्रकुर्वता।
ईश्वर-स्मरणं कर्त्तुं शक्यते वा न वा मया?॥

पुजारी प्राह तच्छ्रुत्वा स्मरणं प्रार्थनं प्रभोः।
निःसन्दिग्धं क्वचित्कर्त्तुं कदाचिद्वाऽपि शक्यते॥

## नायकाः खलनायकाः

वार्त्तालाप-प्रसङ्गेषु देवदत्तस्त्वथैकदा।
प्रसिद्धमभिनेतारं कञ्चिदेवम् उवाच यत्॥

अत्यन्त-व्यस्तताहेतोरागन्तुं नैव शक्तवान्।
भवदीयविवाहेऽहम् इति दुःखं सदा मतम्॥

तस्य तद्वचनं श्रुत्वाऽभिनेता स तु तत्क्षणम्।
देवदत्तं सखायं स्वं सान्त्वयन् एवमाह यत्॥

तत्र चिन्ता न कर्त्तव्या ध्रुवमेव त्वया सखे!।
ममाऽन्येषु विवाहेषु संगन्तव्यं सुनिश्चितम्॥

## वार्धक्यं कथम् एकस्मिन्

एकस्मिन्नेव पादेऽथ कश्चिद् वृद्धः पितामहः।
पीडया दुःखितस्तावद् वैद्यराजम् उपागतः॥

निरीक्ष्य तं नरं शीघ्रं वैद्यराजो ब्रवीति यत्।
वृद्धावस्था-प्रभावेण केवलं कष्टमस्ति तत्॥

वैद्यस्य वचनं श्रुत्वा वृद्धः स पुरुषस्तदा।
महदाश्चर्यम् आध्याय सविस्मयम् उवाच यत्॥

उभयोः पादयोरेव समानाऽऽयुर्मतं परम्।
कथं केवलमेकस्मिन् पादे वृद्धत्वम् आगतम्?॥

## प्रमत्तानां विचित्रता

आत्मानं गान्धिनं चैव मन्यमानं तु रोगिणम्।
पृष्टवान् एकदा क्षुब्धो मनोरोगचिकित्सकः॥
त्वया कथमिदं ज्ञातं यत् त्वं गांधीति वर्त्तसे?।
तदा मत्तोऽब्रवीत् यन्मां गांधीजी प्रोक्तवान् स्वयम्॥
तस्य तद्वचनं श्रुत्वा सहसा तं चिकित्सकम्।
समीपस्थः प्रमत्तोऽन्यो मनोरोगी जगाद यत्॥
असत्यमेव ब्रूतेऽसौ यतो नैव कदाप्यहम्।
तथा हि प्रोक्तवान् एनम् आत्मानं मन्यते यथा॥

## रात्रौ किं करवाण्यहम्

रोगी चिकित्सकं प्राह स्वरोगं विनिवेदयन्।
निशि निद्रा न चाऽऽयाति भैषज्यं कुरुतां भवान्॥
रोगिणो वचनं श्रुत्वा वैद्यः स सस्मिताऽऽननः।
प्रत्यूचे विहसन् मन्दं रोगिणं तदिदं वचः॥
अरे! जीवनमेतत् तु कार्यार्थम् एव निर्मितम्।
परं त्वं शयनं कृत्वा व्यर्थं तत् कुरुषे कथम्?॥
वैद्यस्य वचनं श्रुत्वा रोगी किञ्चिद् विचारयन्।
चिकित्सकमुवाचेदं मुहुः गंभीरया गिरा॥
चौर्यं कर्त्तुं न जानामि भित्तिच्छेदं न ना तथा।
पुनस्तत् किं करिष्यामि जागरित्वा त्वहं निशि?॥

## एकमेवाऽवगच्छामि

एकदा यज्ञदत्तो वै देवदत्तं च पृष्टवान्।
विभिन्नानां तु धर्माणां रहस्यं कथयस्व माम?॥

मित्रस्य वचनं श्रुत्वा देवदत्तः स्मिताऽऽननः।
मन्दं मन्दं विहस्यैवं यज्ञदत्तमुवाच यत्॥

हिन्दूधर्मस्य किं तत्त्वं बौद्धधर्मस्य किं तथा।
ईसाई-धर्मतत्त्वं किम्? मुस्लिमानां च किंभवेत्?॥

स्वरूपं सिख-धर्मस्य जैन-धर्मस्य किं च वा?।
नाऽहं जानामि तत्सर्वम् इति दुःखं सदैव मे॥

एकस्यैवाऽथ धर्मस्य तत्त्वं जानामि सर्वथा।
कथयन्ति जना लोके तं धर्मं मासिकं सखे!॥

## वैद्य एव दिवंगतः

हृद्रोगपीडितस्तावद् देवदत्तस्त्वथैकदा।
चिकित्साभवने यस्मिन् दिने चाऽसौ प्रवेशितः॥

तस्मिन्नेव दिने तस्य सौभाग्यात् लाटरीधनम्।
रूप्याणां दशलक्षाणाम् उद्घोषितमथाऽभवत्॥

हृदाघातवशादेषा महाहर्षप्रदायिका।
सूचना देवदत्ताय सर्वथा परिवर्जिता॥

किञ्चित् स्वास्थ्ये च सम्प्राप्ते चिकित्सक उवाचयत्।
श्रुतं सहस्त्रप्याणां लाटरी निःसृता तव॥

तच्छ्रुत्वा देवदत्तस्तं चिकित्सकमुवाच यत्।
यद्येवं तर्हि रूप्याणामर्धं तुभ्यं प्रदास्यते॥

किञ्चित् काले व्यतीते च वैद्यस्तम्पुनरब्रवीत्।
सखे! दशसहस्राणां लाटरीधनमस्ति तत्॥

देवदत्तस्तदाकर्ण्य पुनरेव तमब्रवीत्।
मया पञ्चसहस्रं तु तदा तुभ्यं प्रदास्यते॥

किंञ्चित्कालस्य पश्चात्स वैद्यस्तम्पुनरब्रवीत्।
यदि ते लक्षरूप्याणि स्युस्तदा किं करिष्यसि?॥
तदाप्यहं ध्रुवं तुभ्यम् अर्धं तद् लाटरीधनम्।
प्रदास्यामीति नैवाऽत्र सन्देहं कुरुतां क्वचित्॥

ततश्चिकित्सकस्तस्मै सूचनां सत्यमाह यत्।
वस्तुतो दश लक्षाणां लाटरी तव निःसृता॥

तच्छ्रुत्वा देवदत्तस्तु चिकित्सकमुवाच यत्।
यद्येवं पञ्चलक्षाणि दास्यन्ते रूप्यकाणि ते॥

वैद्यस्तु तत्समाकर्ण्य महाहर्षप्रभावितः।
तत्क्षणं हृदयाघातम्प्राप्य मृत्युमवाप्तवान्॥

## न कोऽप्यधिगतो मया

साहित्यिक्यां हि चर्चायां लेखकः कश्चिदेकदा।
साहित्यकारमन्यं तु वाक्यमेवमुवाच यत्॥

परिचर्चा वृथा चेयं नीरसा मत्कृते परम्।
त्वया समं तु वार्त्तायाम् आनन्दः कश्चिदागतः॥

तस्य तद्वचनं श्रुत्वा लेखकस्य यशस्विनः।
असौ साहित्यकारस्तु लेखकम्प्रत्युवाच यत्॥

भवांस्तु मम सामीप्यादानन्दं प्राप्तवान् क्वचित्।
परं कश्चिन्मया प्राप्तो नाऽऽनन्दाय तथा नरः॥

## स्वयं श्रोतुं समुत्सुकः

सुवक्तृत्वकलायाश्च प्रशंसां व्याहरन् बहु।
सभाध्यक्षस्तु श्रीमन्तं वक्तारमाह्वयद् यदा॥

वक्ता महोदयाश्चाऽसौ सभाध्यक्षकृतां तदा।
स्वकीयाऽतिप्रशंसां ताम् आलक्ष्य सस्मिताऽऽननः॥

स्वकीयभाषणाऽऽरम्भे सभाध्यक्षमहोदयम्।
धन्यवादं तु विज्ञाप्य श्रोतृन् सम्बोध्य चाऽऽह यत्॥

मम भाषणशैल्यास्तु प्रशंसा याऽत्र वर्णिता।
तच्छ्रुत्वाऽहं स्वयं नैजं भाषणं श्रोतुमुत्सुकः॥

## भूमिं भोक्तुं न चाऽऽगताः

युद्धकाले तु संक्षुब्धाः सैनिकाः केचिदेकदा।
सरोषभावमापन्नाः सेनानायकम् अब्रुवन्॥

भोजनं दीयते यन्नस्तत्र च मृत्तिकाकणाः।
प्राप्यन्ते बहवस्तन्न भोक्तुं तत् पारयामहे॥

तेषां तद्वचनं श्रुत्वा स सेनानायकोऽपि तान्।
प्रोवाच तत्र साक्रोशं भर्त्सयन्निव सैनिकान्॥

मातृभूमेः सुरक्षार्थं ब्रूत! किमिह चाऽऽगताः।
स्वादितुं भोजनं किं वा यूयमत्र समागतः?॥

तस्य तद्वचनं श्रुत्वा कश्चित् सैनिक आह यत्।
रक्षार्थम् आगताः किन्तु न तां भोक्तुं समागताः॥

## सीमेन्टं नैव प्राप्यते

सीमेन्टस्य नवा फैक्ट्री योजनायां प्रतिश्रुता।
तस्याऽभावं निराकर्त्तुं यथाशीघ्रं प्रयत्नतः॥

दुःखमेतत् परं तावद् वर्त्तते महदत्र यत्।
फैक्ट्री-भवननिर्माणे सीमेन्टं नैव लभ्यते॥

## सखायः सर्पसदृशाः

कदाचिदपि मित्रत्वे येनाऽद्यावधि कुत्रचित्।
चायपानार्थमप्येकं मित्रं नैव निमन्त्रितम्॥

साग्रहं दुग्धपानार्थं नयन्तं मित्रमण्डलम्।
देवदत्तम् उवाचैवं सखा कश्चन विस्मितः॥

कृपण! देवदत्त! त्वं ब्रूहि किं कारणं च यत्।
निमन्त्रयसि मित्राणि दुग्धपानार्थम् अद्य वै?॥

मित्राणां तद्वचः श्रुत्वा देवदत्तः सुधीस्तदा।
मन्दं मन्दं विहस्यैवं मित्राणि प्रत्युवाच यत्॥

हे मूढाः! किं न जानीध्वे दुग्धदानस्य कारणम्?।
पुण्या तु तिथिरद्यैव वर्त्तते नाग-पञ्चमी॥



द्वितीयेऽस्मिन् परिच्छेदे विद्यमाना दीर्घकाया एकादशसंख्याका इमाः कविताः प्रायो देशस्य विभिन्नेषु भागेषु समायोजितेषु संस्कृत-कविसम्मेलनेषु यथाऽवसरं श्रोतृणां समक्षं सोत्साहं समुपस्थापिताः। एतासु कवितासु देशस्य साम्प्रतिकाः परिस्थितयस्तद्यथा—महार्घता, भ्रष्टाचार-जन्या पीड़ा, निर्वाचन-दुर्व्यवस्था, नवसंचारमाध्यमानां कुप्रभावः, भ्रातृ-भ्रातृव्यवादः, निर्धनानां शोषणम्, राजनेतॄणां कदाचरणम् इत्येवं प्रभृतयो विषयाः सहजतया प्रस्तुताः।

सरलया संस्कृतगिरा समुपस्थापिता एताः काव्यरचना यथा संस्कृत-कविसम्मेलनेषु श्रोतृणां हृदयम् आह्लादयन्ति तथैवाऽत्र पाठकानामपि मनोरञ्जनं कुर्वाणाः संस्कृत-रचनासु रचनाकारेषु च देशस्य सामयिकसमस्याः प्रति सर्वथाऽनौदासीन्यम् इत्यपि ध्वनयन्ति।।

# पश्य नवाः प्रवहन्ति वायवः

**नवो युगो वृत्तान्तोऽभिनवः।**
**पश्य नवाः प्रवहन्ति वायवः॥**

अशिक्षितानां पूजा दृष्टा
उत्कोचैः कर्मिणः प्रहृष्टाः,
दुष्टा इह परमं सन्तुष्टाः
श्रेष्ठाः किन्तु सर्वथा रुष्टाः।

बुद्धिजीविनो गृहे प्रविष्टाः
समाचारपत्रे संश्लिष्टाः,
चालयन्ति शासनं तस्कराः
उग्रवादिनो हृष्टाः पुष्टाः।

श्रीभूपेन-दलाल - हिन्दुजा
बैङ्कस्वामिनो हर्षद मेहता,
नर्त्तयन्ति लक्ष्मीमङ्गुलिषु
किंकर्त्तव्य - विमूढा जनता।

दैनन्दिनं सदैव वर्धते
उत्कोचोदर - गर्त्त - पीनता,
पश्यतु नैव परन्तु वर्त्तते
महार्घतायां सखे! न्यूनता।

नेतारो मात्सर्य - पीड़िताः
सत्तासंघर्षेषु सज्जिताः,
देशस्याऽस्य प्रशासनासने
गर्जति भ्रष्टाचार-दानवः।।

**नवो युगो वृत्तान्तोऽभिनवः।**
**पश्य नवाः प्रवहन्ति वायवः।।१।।**

हत्या बलात्कारम् अपहरणम्
सज्जन - मान - मर्दनाचरणम्,
दिशि दिशि विलोकयन्नपि देशे
कथन्नाऽस्तिभगवतोऽवतरणम्?।

राजनीतिरधुनाऽस्ति भारते
क्षुद्र - कुटुम्ब - स्वार्थ - पर्यायः,
बलिनो घ्नन्ति निर्बलान् नितराम्
नष्टो विधि - शासन - सङ्कायः।

नार्याः शोषणम् इह कुर्वाणः
यौतकासुरः सदा जृम्भते,
पदे पदे नववधूदाहकः
वैश्वानरः सदैव वर्धते।

डङ्कलनीतिरियं कलङ्किता
यदि विकासमिह प्राप्स्यत्यनिशम्,
स्वावलम्बिता स्यान्निराश्रिता
पराधीनता स्थास्यति सततम्।

वैदेशिक-व्यापार-माध्यमैः
भारतीयजनताऽतिशोषणम्,

पाश्चात्त्य-संस्कृति-प्रचारकैः
भारतीय-चिन्तन-विनाशनम्।।
नव-सञ्चार-माध्यमाऽनुभवः।
पश्य नवाः प्रवहन्ति वायवः ।।२।।

जनकं सुरापानविनिमग्नम्
दृष्ट्वा पृच्छति तनयो नग्नम्,
तात! कथं तव रक्ते नयने?
कथं पतति देहात्ते वसनम्?।

मुहुर्मुहुः किं पिबसि विशिष्टम्?
मह्यं देहि पातुम् अवशिष्टम्,
श्रुत्वा वचनं निजतनयस्य
जनकस्तदा ब्रवीति विहस्य।

मद्यं त्विदं पिबन्ति महान्तः
अभिनेतारः कवयः सन्तः,
शिष्या विद्यालये सगुरवः
नेतारश्च तथा भगवन्तः।

एहि तिष्ठ पिब समं मया त्वम्
मिश्रय जलं ग्लासपात्रे त्वम्,
पश्य कीदृशी रुचिरा मधुरा
वैदेशिकी विशिष्टा मदिरा।

श्रुत्वा पितुर्वचनमतिरुचिरम्
पीत्वा सुरां स तनयोऽप्यचिरम्,
विलुठति भुवि वमनं कुर्वाणः
जनको हृष्यति तम् ईक्षमाणः ।।

नेतारो मात्सर्य - पीड़िताः
सत्तासंघर्षेषु सज्जिताः,
देशस्याऽस्य प्रशासनासने
गर्जति भ्रष्टाचार-दानवः।।

**नवो युगो वृत्तान्तोऽभिनवः।**
**पश्य नवाः प्रवहन्ति वायवः।।१।।**

हत्या बलात्कारम् अपहरणम्
सज्जन - मान - मर्दनाचरणम्,
दिशि दिशि विलोकयन्नपि देशे
कथन्नाऽस्तिभगवतोऽवतरणम्?।

राजनीतिरधुनाऽस्ति भारते
क्षुद्र - कुटुम्ब - स्वार्थ - पर्यायः,
बलिनो घ्नन्ति निर्बलान् नितराम्
नष्टो विधि - शासन - सङ्कायः।

नार्याः शोषणम् इह कुर्वाणः
यौतकासुरः सदा जृम्भते,
पदे पदे नववधूदाहकः
वैश्वानरः सदैव वर्धते।

डङ्कलनीतिरियं कलङ्किता
यदि विकासमिह प्राप्स्यत्यनिशम्,
स्वावलम्बिता स्यान्निराश्रिता
पराधीनता स्थास्यति सततम्।

वैदेशिक-व्यापार-माध्यमैः
भारतीयजनताऽतिशोषणम्,

 

पाश्चात्य-संस्कृति-प्रचारकैः
भारतीय-चिन्तन-विनाशनम्।।

**नव-सञ्चार-माध्यमाऽनुभवः।**
**पश्य नवाः प्रवहन्ति वायवः ।।२।।**

जनकं सुरापानविनिमग्नम्
दृष्ट्वा पृच्छति तनयो नग्नम्,
तात! कथं तव रक्ते नयने?
कथं पतति देहात्ते वसनम्?।

मुहुर्मुहुः किं पिबसि विशिष्टम्?
मह्यं देहि पातुम् अवशिष्टम्,
श्रुत्वा वचनं निजतनयस्य
जनकस्तदा ब्रवीति विहस्य।

मद्यं त्विदं पिबन्ति महान्तः
अभिनेतारः कवयः सन्तः,
शिष्या विद्यालये सगुरवः
नेतारश्च तथा भगवन्तः।

एहि तिष्ठ पिब समं मया त्वम्
मिश्रय जलं ग्लासपात्रे त्वम्,
पश्य कीदृशी रुचिरा मधुरा
वैदेशिकी विशिष्टा मदिरा।

श्रुत्वा पितुर्वचनमतिरुचिरम्
पीत्वा सुरां स तनयोऽप्यचिरम्,
विलुठति भुवि वमनं कुर्वाणः
जनको हृष्यति तम् ईक्षमाणः ।।

**नव्ययुगस्य प्रसादोऽभिनवः ।**
**पश्य नवाः प्रवहन्ति वायवः ।।३।।**

विज्ञापनं "निरोध" - वस्तुनः
दूरदर्शने निशि निशि नित्यम्
दृष्ट्वा पृच्छति तनया जननीम्
मातः! किमिदम्? देहि मदर्थम् ।

श्रुत्वा लघुतनयाया वचनम्
माता वदति विहस्य सलज्जम्,
नेतं वस्तु विद्यते तुभ्यम्
ज्येष्ठीभूय प्राप्स्यसेऽनुदिनम् ।

तिरस्कृत्य मातुर्वचनं सा
रोदिति भृशं निरोधं नेतुम्,
किंकर्त्तव्यविमूढा जननी
सफला भवति न तां सान्त्वयितुम् ।

पातञ्जलदर्शने निगदितः
क्व गतश्चित्त-वृत्ति-निरोधः?
चारित्रिकपतनाद् उद्धर्त्तुम्
क्व गतः काम-क्रोध-विरोधः? ।

गृहे गृहेऽस्ति निरोधपैकटम्
गृहे गृहे च सुरा - सङ्कर्षः,
प्रतिभवने ब्ल्यू-फिल्म-दर्शनम्
कोमल-बाल-चित्त-संघर्षः ।।

**आर्यावर्त्त - विनाश - कारवः ।**
**पश्य नवाः प्रवहन्ति वायवः ।।४।।**



 

# जनवर्याः षड्विंशदिनांकः

जनवर्याः षड्विंशदिनाङ्कः
पश्य सखे! पुनरेष चागतः।।

नवा चक्रचिह्निता पताका
यत्र तत्र सर्वत्र दृश्यते,
नगरे नगरे ग्रामे ग्रामे
'जन-गण-मन'इतिध्वनिःश्रूयते।

जय-घोषैराकाशो व्याप्तः
देश-भक्त-नाना - पुरुषाणाम्,
गान्धी-नेहरू - तिलक - गोखले-
लालबहादुर - प्रभृति-नराणाम्।

विद्यालये सभा सञ्जाता
हृष्टा बालाः प्राप्य मोदकम्,
किन्तु वयस्कानां कर्त्तव्यम्
कः कथयिष्यति न मया ज्ञातम्।

जाति - भ्रातृ - भ्रातृव्यवादिता
क्षुद्रा भाषा - प्रान्तवादिता,
कलहोऽवर्ण - सवर्ण-नराणाम्
मिथ्याऽऽडम्बर-भाव-भराणाम्।

यदा समाप्तो भविता देशे
तदा प्रगतिरीप्सिता प्रदेशे,
पूर्व पश्चिमोत्तरदिशि जनता
दक्षिणदिशि या चापि संस्थिता।

केवलमेषा श्रितबहुवेशा
'भारतीय' संज्ञया प्रसिद्धा,
भातृमातुः शुभवदनेऽद्य
मन्दस्मयो विशेष आगतः।।

**जनवर्याः षड्विंशदिनाङ्कः**
**पश्य सखे! पुनरेष चागतः।।१।।**

सागर-तट-सौन्दर्य-पेशलः
नारिकेलसंकुलः केरलः,
सत्यं नारिकेलफलतुल्यम्
भारतीयजनतानां चित्तम्।

अन्तः कोमलरसभरितत्वम्
किं न प्रकटयति हृदि हरितत्वम्?
कथं पुनः शुष्कता प्रभूता?
क्वचिद् रूक्षता कथमारूढा?।

देशे यत्र कुत्रचिद् दृष्टम्
नाना - सम्प्रदाय-गत-युद्धम्,
सत्यं ब्रूहि तदेतत् सर्वम्
किं न द्योतयति हृदयमशुद्धम्?

 

नृपतिरशोको हिंसाविरतः
बुद्धो यत्र महात्मा निरतः,
तद्बिहारभूमेः समुत्थितः
दया-शान्ति-सन्देश आगतः।।

**जनवर्याः षड्विंशदिनाङ्कः**
**पश्य सखे ! पुनरेष चागतः।।२।।**

पूर्व - समुद्र - तीर - परिनिष्ठम्
उत्कलीय-कोणार्क-मन्दिरम्,
कस्य न चित्ते जनयति भावम्
सहजं सत्यं शिवं सुन्दरम् ।

पश्चिमसागर - तीर - निषण्णः
प्रत्याघात - दिनेऽप्यविषण्णः,
गुर्जरदेशः पुण्याक्रान्तः
गांधी-दयानन्दयोः प्रान्तः।

लौहपुरुष - पुरुषार्थमापकः
राजतन्त्र - सत्ता - समापकः
भारत-राष्ट्रैकता - कारकः
लोकतन्त्र-महिमाऽवभासकः।।

**जनवर्याः षड्विंशदिनाङ्कः।।**
**पश्य सखे ! पुनरेष चागतः।।३।।**

स्वतन्त्रताया महाघोषणाम्
अधिकुर्वतां महावीराणाम्,
वीरप्रसविनी बङ्गभूरियम्
बंकिम-विपिन-सुभाषवराणाम्।

काव्यकला - साहित्य - साधना
यत्र रवीन्द्र - कवीन्द्र - कामना,
मानव - मानस - मङ्गलकामी
यत्र विवेकानन्दः स्वामी।

तेषां कथं महापुरुषाणाम्
नानाऽऽध्यात्मिकभावभराणाम्,
निर्धन - जन - चिन्तनमपहाय
सन्ततयः स्वार्थेषु सज्जिताः?।

क्षुद्र-राज्य - सत्ता - समागमे
कथं महापङ्केषु मज्जिताः,
संकीर्णता पृथक्तावादम्
ध्यायन्तोऽपि च नैव लज्जिताः।

'सत्यं ज्ञानमनन्तं ब्रह्म'
इति वचनं कथमेव विस्मृतम्?
पारस्परिक - वृथा - कलहेषु
सौन्दर्यं हृदये तिरस्कृतम्?।

राष्ट्रध्वजं त्रिरङ्गं दृष्ट्वा
शुभं पर्वमाहात्म्यं स्मृत्वा,
अद्य परन्तु जनानां चित्ते
शुभ-सौन्दर्य-विशेष आगतः॥

**जनवर्याः षड्विंशदिनाङ्कः॥**
**पश्य सखे ! पुनरेष चागतः॥४॥**

देशे श्यामलतां रचयन्ती
सम्पन्नतां सदा गमयन्ती,
पवित्रयन्ती नगर-ग्रामान्
रमयन्ती चाऽऽध्यात्मिकभावान्।

प्रोञ्छन्ती चञ्चलकल्लोलैः
पाप - पङ्कम् अतिहीन - जनानाम्,
शमयन्ती सा शीतलोर्मिभिः।
हिंसा-द्वेषाऽनलं नराणाम्।

सुधामयी कल-कलध्वनि-षङ्गा
यत्र हिमवतः प्रभवति गङ्गा,
तस्मिन् देशे पतित-पावके
वेदशास्त्र - स्वाध्याय - धारके।

सांख्य - योग - वेदान्त - वेदिते
गीता - पूत - पुराण - पोषिते,
दर्शनोपनिषदां प्रवर्त्तके
युक्ति-भुक्ति - मुक्ति-प्रदायके।

आदिकाव्य - वैभव - विभूषिते
व्यास-भास - साहित्य - साधिते,
कालिदास- कविता - विलासिते
नृत्य - गीत - सङ्गीत - सेविते।

विविधोद्योग - समृद्धि - वर्धिते
नव-निर्माण - कथा - प्रवर्तिते,
वैज्ञानिक - प्रतिभा - विकासिते
प्रत्यग्रोन्नति - पथि विराजिते ।

जनसत्ता - समता - समर्थकः
राष्ट्रभक्ति - कर्त्तव्य - बोधकः,
गणतन्त्रस्य दिशोऽनुदेशकः
स्वाभिमान - शुभ-भावपूरकः।।

**जनवर्याः षड्विंश-दिनाङ्कः।**
**पश्य सखे ! पुनरेष चागतः।।५।।**



# एकविंशी शताब्दी समायाति

इयम् एकविंशतिः शदाब्दी
पश्य सखे ! आयाति भारते।।

श्वानो गच्छति कारयानके
मार्जारः पर्यङ्के शेते,
किन्तु निर्धनो मानवबालः
बुभुक्षितो रोदनं विधत्ते।

अचेतना पाषाणमूर्तयः
वस्त्रसज्जिताः संराजन्ते,
किन्तु दरिद्रो वृद्धोऽशक्तः
शीते वस्त्रं विना कम्पते।।

इयम् एकविंशतिः शताब्दी
पश्यसखे! आयाति भारते।।१।।

विद्यालयेषु भवनाऽभावात्
ग्रामे तरुच्छायासु बालकाः,
प्रकृतिनिर्मिते वातावरणे
किं पठन्ति जानन्तु भवन्तः।

परस्परं ते कलहायन्ते
मुहुर्मुहुर् अपशब्दायन्ते,
किन्तु शिक्षकाश्चिन्तारहिताः
तरोरधस्तात् सुखं शेरते।।

**इयम् एकविंशतिः शताब्दी**
**पश्य सखे! आयाति भारते।।२।।**

अतिवृष्टिभिः पीड़िता ग्रामाः
यदा जलौघे भृशं निमग्नाः,
जलप्रवाहे वहन्ति पशवः
अन्नाऽभावे रुदन्ति शिशवः।

एतमेव जलप्रलयं द्रष्टुम्
दुर्लभमिदं दृश्यमवगन्तुम्,
वायुयानमारुह्य प्रहृष्टः
नेता सपरिवारम् उड्डयते।।

**इयम् एकविंशतिः शताब्दी**
**पश्य सखे! आयाति भारते।।३।।**

क्वचिद् बाबरीमस्जिद्-काण्डम्
क्वचिद् अयोध्यामार्च-कीर्तनम्,
सतीप्रथामण्डने भाषणम्
अस्पृश्यता-समर्थन - वचनम्।

समानतायाः अधिकारस्य
संविधान - भावना - नाशनम्,
मन्दिरेषु हरिजनव्यक्तीनाम्
नेवाऽद्यापि प्रवेशस्तनुते।।

**इयम् एकविंशतिः शताब्दी**
**पश्य सखे! आयाति भारते।।४।।**

निर्वाचने न कोऽपि सज्जनः
प्रत्याशी भवितुमिह क्षमः,
चालयन्ति निर्वाचनकार्यम्
साहासिकास्तस्करा दस्यवः।

मतदाने केन्द्रेऽधिकारिणः
चाटुकारितामेव कुर्वते।
पराजितोऽपि येन प्रत्याशी
अन्तिमचरणे विजयं लभते।।

**इयम् एकविंशतिः शताब्दी**
**पश्य सखे! आयाति भारते।।५।।**

मुख्यमन्त्रि - निर्वाचन - करणे
विधायकानां न त्वधिकारः,
दिल्लीतः प्रेक्षका निशायाम्
आगच्छन्ति राजधानीषु।

प्रातः कश्चित् काष्ठालूकः
त्वरितमेव शपथं गृह्णीते,
लोकतन्त्रमेतत् सुनवीनम्
राजतन्त्रमुपहसति भारते।।

**इयम् एकविंशतिः शताब्दी**
**पश्य सखे! आयाति भारते।।६।।**

क्वचित् समक्षे बैंक-लुण्ठनम्
क्वचित् बलात् बालिकाऽपहरण्,
क्वचिद् यौतकार्थं मध्याह्ने
गृहमध्ये नववधू - ज्वालनम्।

इतोऽधिकं का भवेद् विवक्षा?
दिनेऽप्यत्र नैवास्ति सुरक्षा,
नगरे नगरे मानव-हत्या
मत्कुण-वध-सादृश्यं भजते।।

**इयम् एकविंशतिः शताब्दी**
**पश्य सखे! आयाति भारते।।७।।**

क्व गन्तासि? कुत आयातः?
का ते जननी? कस्ते तातः?
सत्यं ब्रह्म जगन्मिथ्येति
वेदान्तम् अनुचिन्तय भ्रातः!।

वृथा रति नश्वरे शरीरे

भज गोविन्दम् इत्युपदिश्य,
रेलविभागो यत्र सहर्षम्
नित्यं मुक्तिपथं दर्शयते।।

इयम् एकविंशतिः शताब्दी
पश्य सखे! आयाति भारते।।



# जयतु सदा पञ्चदशोऽगस्तः

महाहर्षविषयोऽयं जातः
स्वतन्त्रतादिवसः सम्प्राप्तः।
करे चक्रचिह्नितां पताकां
नीत्वा धावति जनः समस्तः॥
जयतु सदा पञ्चदशोऽगस्तः॥१॥

मिथ्याश्वासन - वचन - भाषणे
नेतारः परमं स्वाधीनाः।
निर्वाचने तु विजयं लब्ध्वा
को न भवति धनसञ्चयव्यस्तः?॥
जयतु सदा पञ्चदशोऽगस्तः॥२॥

व्यापारे ये भवन्ति निरताः
मूल्य-वर्धने सदा स्वतन्त्राः।
जनतायाः कष्टं प्रवर्धतां
भवतु जनः सामान्यस्त्रस्तः॥
जयतु सदा पञ्चदशोऽगस्तः॥३॥

स्वतन्त्रतामनुभवन्ति स्वकार्ये
चौर - दस्यु - लुण्ठाकजनोऽयम्।
दिवसोऽयं स्मारयति यदेष
पुलिस-जनैःकृत एवाऽऽश्वस्तः।।
जयतु सदा पञ्चदशोऽगस्तः।।४।।

गुरवः पाठनपाठनात् मुक्ताः
परम-स्वतन्त्रः छात्रसमूहः।
कश्च बोधयति किं कर्तव्यम्?
आदर्शः सङ्गमः परास्तः।।
जयतु सदा पञ्चदशोऽगस्तः।।५।।

यत्र तत्र देशेऽस्ति विप्लवः
उग्रवाद-प्रेरिताः शङ्कवः।
तस्य कारणं किमिति पृष्टे
नेता वदति विदेशी हस्तः।।
जयतु सदा पञ्चदशोऽगस्तः।।६।।

धनिका एव पूजिता देशे
उपेक्षितश्च सज्जनो निर्धनः।
तस्माद् धनमधिगन्तुं नितरां
नैतिकताया विषयो ध्वस्तः।।
जयतु सदा पञ्चदशोऽगस्तः।।७।।

कर्मचारिणः सुविधाशुल्कम्
आदातुं सर्वथा स्वतन्त्राः।
शोषणे च सामान्यजनस्य
कार्यालयस्तु सकलोऽभ्यस्तः॥
**जयतु सदा पञ्चदशोऽगस्तः॥८॥**

सदाचार इह बहुपरतन्त्रः
भ्रष्टाचारः सरति स्वतन्त्रः।
किं न सूचयति तदिदं दृष्ट्वा
देशोऽयं विलपति चाऽस्वस्थः॥
**जयतु सदा पञ्चदशोऽगस्तः॥९॥**

जातिवाद - प्रायोजितयुद्धं
सम्प्रदाय - सिञ्चित - सङ्घर्षम्।
प्रतिप्रान्ते संलक्ष्य प्रत्यहं
चीत्करोति कथम् इन्द्रप्रस्थः॥
**जयतु सदा पञ्चदशोऽगस्तः॥१०॥**



 

# नाऽन्यः पन्था विद्यतेऽयनाय

सर्वे प्रत्याशिनस्तु भ्रष्टाः
कुत्र मार्गयसि स्वच्छं चरितम्?
मतदाने समये सम्प्राप्ते
मतपत्रं किं पश्यसि मित्र!
प्रयतस्वाऽत्र महाभ्रष्टानाम्
मध्ये कस्यचिदपि वरणाय।
**नाऽन्यः पन्था विद्यतेऽयनाय॥१॥**

जलं दूषितं स्थलं दूषितम्
वायुमण्डलं महादूषितम्,
पातव्यम् इदमेव हि सलिलम्
श्वसितव्यं चैवाऽस्मिन् पवने,
भोपालं नगरं चाऽऽह्वयते
शीघ्रं सज्जो भव मरणाय।
**नाऽन्यः पन्था विद्यतेऽयनाय॥२॥**

 

वस्तुनि वस्तुनि मिश्रण-कार्यम्
रोगवर्धनं देह - नाशनम्,
शुद्धं दुग्धम् अत्र दुर्लभम्
नाऽस्ति च शुद्धविषस्य प्रापणम्,
स्निग्धं वसामिश्रमपि बुद्ध्वा
भव तत्पर एनम् अशनाय।

**नाऽन्यः पन्था विद्यतेऽयनाय॥३॥**

बहुयोग्योऽपि भृतिं नो लभते
बहुविद्योऽपि न कार्यरतोऽस्ति,
आरक्षण-नियमेन निबद्धः
हीनजनोऽपि पदेषु रतोऽस्ति,
यदि चेच्छसि प्राप्तुं पदमत्र
प्रार्थय देवम् अधम-जननाय।

**नाऽन्यः पन्था विद्यतेऽयनाय॥४॥**

सर्वेषां दानानां मध्ये
उत्कोचस्य तु दानं श्रेष्ठम्,
एतद्दानं प्राप्य कर्मिणः
समुद्यतास्तव कार्यं कर्त्तुम्,
यदि चेच्छसि साधयितुं कार्यम्
कुरु शीघ्रम् एतद्दानाय।

**नाऽन्यः पन्था विद्यतेऽयनाय॥५॥**



# धन्य एष निर्वाचन-कालः

भारतदेशे पुनरायातः
धन्य एष निर्वाचन-कालः॥

नगरे-नगरे ग्रामे-ग्रामे
सम्प्रदायवादस्य पूजनम्,
अशिक्षितानां मतमधिगन्तुम्
पदे-पदे मिथ्याऽभिभाषणम्।

यदि द्रष्टुम् इच्छन्ति भवन्तः
दुष्ट - धूर्त्त - पुरुषाऽभिनन्दनम्,
जाति- भ्रातृ-भ्रातृव्य-वादयोः
चतुष्पथेषु नग्न-नर्त्तनम्।

मिथ्याऽऽश्वासन-मिथ्यावचसोः
प्रत्याशिनाम् अतीव स्पर्धनम्,
निहत्य पारस्परिकं स्नेहम्
घृणा - रोष - विद्वेष-वर्धनम्।

पश्यत साधुजनानां वेशे
राजनीति-माध्यमेन देशे,
जनतां वञ्चयितुं समागतः,
वञ्चक-दस्यु-शठानां जालः॥

धन्य एष निर्वाचन-कालः॥१॥

मिथ्याप्रत्याशिनां समूहः
मत-विभाजनार्थ समुद्यतः,
धनलाभाय क्वचित् प्रत्याशी
निर्वाचन-समरे समुत्थितः।

कश्चित् निर्वाचनं स्थगयितुम्
निर्बल-प्रत्याशिनं हिनस्ति,
कञ्चिद् 'गुण्डा' दल-समन्वितः
प्रबलं प्रत्याशिनं पिनष्टि।

कश्चिद् आग्नेयास्त्र-संवृतः
मतदानस्य केन्द्रम् अधिकुरुते,
प्रत्याशिनश्चरित्रं हन्तुम्
मिथ्या-निम्न-प्रचारं तनुते।

उत्कोच उत्फुल्लति सततम्
भ्रष्टाचारो विचरति निरतम्,
दृष्ट्वा सकलं छद्मपुराणम्
नीचैर्भवति सुधीनां भालः॥

धन्य एष निर्वाचन-कालः॥२॥

मूषक-मार्जारयोः साम्प्रतम्
मत-प्राप्त्यर्थं ग्रन्थि-बन्धनम्,
जनसेवा-व्याजेन नायकाः
जनतायाः कुर्वन्ति शोषणम्।

निशि पिबन्ति मद्यम् अथ दिवसे
मद्यनिषेध-सभासु भाषणम्,
यद्यपि तस्कर-वृत्ति-निन्दनम्
किन्तु तस्करैः समं भोजनम्।

व्ययः कोटिरूप्याणां क्रियते
कृष्णधनं तत्कुत आयाति?
निर्वाचने निर्धनः सज्जनः
प्रत्याशी भवितुं न हि क्षमः।

धनिकानाम् अत एव केवलम्
प्रवर्त्तते निर्वाचन-युद्धम्,
लोकतन्त्रमस्माकं दंष्टुम्
फूत्कुरुते भयङ्करो व्यालः।।

**धन्य एष निर्वाचन-कालः।।३।।**



# पूर्णतामगमन्न यात्रा

**जीवनं सकलं समाप्तम्,**
**पूर्णतामगमन्न यात्रा।।**

किं कुकृत्यं किं सुकृत्यम्,
को रिपुः कश्चाऽस्ति मित्रम्?
नैव ज्ञातमिहाऽद्य यावत्
जना भुवि नाना चरित्राः।।
**पूर्णतामगमन्न यात्रा ।।**

सज्जनाः संक्षुभित्त-चिन्ताः
दुर्जनाः सन्निहितवित्ताः,
को विधास्यति धर्मकार्यम्?
अहो ! दैवगतिर्विचित्रा।।
**पूर्णतामगमन्न यात्रा।।**

नैव पितरस्तर्पितास्ते
नापि गुरवः सेवितास्ते,
निर्मितोऽहं यत्कृपाभिः
कियत्प्रत्युपकारमात्रा!।।
**पूर्णतामगमन्न यात्रा।।**

सर्वदा संसार-विपिने

मार्गयन्ते मां मृगयितुम्,
साम्प्रतं करवाणि किं यदि
रक्षितो बहुधा विधात्रा।।
**पूर्णतामगमन्न यात्रा।।**

तामसे विषमेऽपि काले
कलहकलिते कलियुगीने,
मानवास्ते दुरितरहिताः
दुर्लभा नितरां पवित्राः।।
**पूर्णतामगमन्न यात्रा।।**

साम्प्रतं जननी नवीना
कष्टकारकमेव मनुते,
लक्ष्मणस्य वन-प्रयातं
वीक्ष्य हृष्यति यत्सुमित्रा।।
**पूर्णतामगमन्न यात्रा।।**



# स्वागतं कुरु होलिकायाः

घृतं शुद्धं दुर्लभं यदि
महार्घं तत्किं बुभुक्षसि?।
दुग्धमपि नो प्राप्यते सत्
भुङ्क्ष्व पत्रं मूलिकायाः॥१॥
**स्वागतं कुरु होलिकायाः॥**
महार्घा शर्करा जाता
इन्धनं नैवोपलब्धम्।
निर्मिता गुझिया न जाता
रोदनं श्रृणु बालिकायाः॥२॥
**स्वागतं कुरु होलिकायाः॥**
समायाति गृहे जलं नो
नैव विद्युत् वर्त्तते वा।
वृथा क्षुभ्यसि, ब्रूहि दोषः
कथं नगरीपालिकायाः॥३॥
**स्वागतं कुरु होलिकायाः॥**
सज्जनान् पीडयति नित्यं
दुर्जनैः सममस्ति सख्यम्।
पश्य गच्छति पुलिस-थानाम्
एष भक्तः कालिकायाः॥४॥
**स्वागतं कुरु होलिकायाः॥**

कलियुगीनं रामराज्यम्

दुष्टधूर्त्त - जनैरुपेतम्।
कुरु सुरक्षार्थं प्रबन्धम्
यदि भुशुण्डीनालिकायाः॥५॥
**स्वागतं कुरु होलिकायाः॥**

नैव चित्रं सुन्दरं यदि
निर्मितं तत्कथं क्षुभ्यसि?
नेह चित्रकरस्य दोषः
एष दोषस्तूलिकायाः॥६॥
**स्वागतं कुरु होलिकायाः॥**

आततायिभिरनुदिनं सा
हन्यते जनता वराकी।
यत्र देशे पापमाहुः
वधे क्षुद्रपिपीलिकायाः॥७॥
**स्वागतं कुरु होलिकायाः॥**

उग्रवादिन इह धरित्र्याम्
जानते नो प्रेमवचनम्।
एकमेव विदन्ति यत् ते
तत्तु वचनं गोलिकायाः॥८॥
**स्वागतं कुरु होलिकायाः॥**
प्रत्यहं गच्छति विमाने
साम्प्रतं नेता नवीनः।
मुहुः पश्यति साभिलाषम्
शाटिकां परिचालिकायाः॥६॥
**स्वागतं कुरु होलिकायाः॥**

[illegible] संसदि सांसदास्ते
नैव जनतां चिन्तयन्ते।
को वदिष्यति समाधानम्?
अस्मदीय-प्रहेलिकायाः॥१०॥
**स्वागतं कुरु होलिकायाः॥**

किमश्लीलं किं च श्लीलम्?
वृथा चिन्तयसे वसन्ते।
वीक्ष्य पीनं पुरः शिथिलय
बन्धनं दृढ़ चोलिकायाः॥११॥
**स्वागतं कुरु होलिकायाः॥**



# एकं परिदेवनम्

येषां हस्तेषु दृष्टा मया पुरा कुसुमकलिकाः,
तेषां हस्तेषु साम्प्रतं शोभन्ते भुशुण्डि-नलिकाः।

येषां मुखानि पुरा दृष्टानि मन्त्रोच्चारण-तत्पराणि,
तेषामेव मुखानि साम्प्रतम् अश्लीलभाषण-पराणि।

येषाम् अधरेषु पुरा विराजते स्म दुग्धपात्रम्,
तेषाम् अधरेषु सुशोभते साम्प्रतं सुरा-पात्रम्।

येषां हृदयेषु पुरा बभूव कदाचिदौदार्यम्
तेषामेव चित्तानि समाचरन्ति साम्प्रतं चौर्यम्।

येषां नेत्रेषु पुरा मया लक्षितो लज्जाभावः,
तेषामेव नयनेषु विराजते साम्प्रतम् असज्जाभावः।

येषां चरणाः पुरा भ्रमन्ति स्म सद्गतिपराः,
तेषामेव चरणाः साम्प्रतम् अधमगतिपराः।

येषां लेखन्यः पुरा लिखन्ति स्म वीरतागानम्,
तेषामेव लेखन्यः साम्प्रतं गायन्ति हीनता-गानम्।

येषां वाद्येषु निःसरन्ति स्म पुरा लोकगीतानि,
तेषामेव वाद्येषु साम्प्रतं वाद्यन्ते शोकगीतानि।

अद्य संसदि सांसदास्ते
नैव जनतां चिन्तयन्ते।
को वदिष्यति समाधानम्?
अस्मदीय-प्रहेलिकायाः॥१०॥
**स्वागतं कुरु होलिकायाः॥**

किमश्लीलं किं च श्लीलम्?
वृथा चिन्तयसे वसन्ते।
वीक्ष्य पीनं पुरः शिथिलय
बन्धनं दृढ़ चोलिकायाः॥११॥
**स्वागतं कुरु होलिकायाः॥**



# एकं परिदेवनम्

येषां हस्तेषु दृष्टा मया पुरा कुसुमकलिकाः,
तेषां हस्तेषु साम्प्रतं शोभन्ते भुशुण्डि-नलिकाः।

येषां मुखानि पुरा दृष्टानि मन्त्रोच्चारण-तत्पराणि,
तेषामेव मुखानि साम्प्रतम् अश्लीलभाषण-पराणि।

येषाम् अधरेषु पुरा विराजते स्म दुग्धपात्रम्,
तेषाम् अधरेषु सुशोभते साम्प्रतं सुरा-पात्रम्।

येषां हृदयेषु पुरा बभूव कदाचिदौदार्यम्
तेषामेव चित्तानि समाचरन्ति साम्प्रतं चौर्यम्।

येषां नेत्रेषु पुरा मया लक्षितो लज्जाभावः,
तेषामेव नयनेषु विराजते साम्प्रतम् असज्जाभावः।

येषां चरणाः पुरा भ्रमन्ति स्म सद्गतिपराः,
तेषामेव चरणाः साम्प्रतम् अधमगतिपराः।

येषां लेखन्यः पुरा लिखन्ति स्म वीरतागानम्,
तेषामेव लेखन्यः साम्प्रतं गायन्ति हीनता-गानम्।

येषां वाद्येषु निःसरन्ति स्म पुरा लोकगीतानि,
तेषामेव वाद्येषु साम्प्रतं वाद्यन्ते शोकगीतानि।

 

येषां गृहेषु पुरा कदाचित् पाल्यन्ते स्म धेनवः कीराः,
तेषामेव गृहेषु पाल्यन्ते साम्प्रतं कुक्कुट्यः शूकराः।
अहो ! क्व गच्छामो वयं किं शोचामो वयम्?,
किं वयं त एव भवामो ये पुराऽभवाम?।

किमस्मदीयं तदेव हृदयं यत् पुरा बभूव?,
किमेतत् तदेव नयनं यत् पुरा बभूव?।

कथमेतत् कुत एतत् इत्यादि-नानाप्रश्नानाम्,
उत्तरं मार्गयामोऽधुना वयम् अतिविकटानाम्।

न चोत्तरं लभामहे बहुविधं चिन्तयन्तोऽपि,
न समाधानमधिगच्छामः प्रत्यहम् आमनन्तोऽपि।

मन्ये कदाचिदुत्तरम् अधिगमिष्यामो ध्रुवम्,
तदा भवन्तमपि सोत्साहं कथयिष्यामो वयम्।

यदि भवन्तः पूर्वमेवोत्तरम् एतेषाम् अधिगच्छन्तु,
तदा कृपया मामपि संसूच्य शीघ्रम् अनुगृह्णन्तु॥



# सत्यमेव जयते

निर्वाचने कोटिरूप्याणां सम्प्रति व्ययं सांसदः कुरुते,
पञ्च-लक्ष-रूप्याणां गणितं किन्तु स घोषयते।।
**सत्यमेव जयते ।।**

साहसिकैः पुरुषैः संयुक्तो मतदाने केन्द्रे प्रत्याशी,
बलादधिकृते मृषा मतानां दानं कारयते।।
**सत्यमेव जयते ।।**

अपराधिनो गृहीताः कथमपि यः कृतमत्र गर्हितं देशे,
किन्तु पुलिस-थानायां गत्वा नेता मोचयते।।
**सत्यमेव जयते ।।**

सदाचार-सम्पन्नः पुरुषः सत्यधार्मिकः किन्तु निर्धनः
तिरस्कृतः स्याद् भ्रष्टो धनिकः सत्कारं लभते।।
**सत्यमेव जयते ।।**

मन्त्रयन्ति ये समं तस्करैः स्थित्वा कार्यालये स्वकीये।
जनकष्टानि श्रोतुमिह देशे समयं नो दधते।।
**सत्यमेव जयते ।।**

‘गांधी जीकी जय’ इत्युक्त्वा मद्यं पिबति मध्यमो नेता ।

मद्य-निषेधसभायां गत्वा भाषणानि कुरुते।।
**सत्यमेव जयते ।।**

दिवसे सर्वसम्मुखे हत्वा कमपि नरं ह्यपराधी गुण्डा,
न्यायालयात् सपदि मुक्तोऽसौवक्षो दर्शयते।।
**सत्यमेव जयते ।।**

जनवर्याः षड्विंशदिनाङ्के पञ्चदशे दिवसे चाऽगस्ते ।
देवो रोदिति किन्तु दानवो मुहुर्मुहुः स्मयते।।
**सत्यमेव जयते ।।**



# प्रत्याशी मतमेष याचते

**निर्वाचन-समयः प्रवर्त्तते।**
**प्रत्याशी मतमेष याचते।।**

त्यक्त्वा नाना-वस्तु-भूषितम्
गृहं निजं वातानुकूलितम्,
महानिदाघे स्विन्न-शरीरः
समर्थकैः सह गच्छति वीरः।

नैव जनपदे कदापि दृष्टः
पञ्च-वर्ष-पर्यन्तं गूढः,
निर्वाचन-समये सम्प्राप्ते
गृहद्वारि मे प्रकटीभूतः।

अस्य करौ बद्धाञ्जलिरूपौ
नेत्रे कोमल-करुणा-कूपौ,
जनताया दृष्ट्वा दारिद्र्यम्
नक्र इवाऽश्रुमोचनं कुरुते।।

**प्रत्याशी मतमेष याचते।।१।।**

विजयं प्राप्य सांसदो भूत्वा
एष भविष्यति पुनर्निगूढः,
स्वीयां निर्धनतामपनेतुम्
मनोयोगतो यत्नारूढः।

आग्नेयाऽस्त्र-संयुतैः पुरुषैः
परिवृतोऽयं गेहे भविता,
सार्धं केनचिदपि संगन्तुम्
नैव राजधान्यां कामयिता।

प्राप्य च लोकसभायां सत्ताम्
वर्धयते निज-वेतन-भत्ताम्,
पुरस्कृत्य जनता-कष्टानि
रेल-भाटकं विस्तारयते॥

**प्रत्याशी मतमेष याचते॥२॥**

स्वविशेषाऽधिकार-विषयेषु
भवत्येष सततं श्रद्धालुः,
सार्वजनिक - चर्चा - सन्दर्भे
संसदि भवति सदा तन्द्रालुः।

धनिकेभ्यः सततं गृह्णीते
काल-धनं निर्वाचन-काले,
तेषामेव हितं साधयते
समागते समये विकराले।

जनतार्थं न हि भद्रभावना
केवलमात्म-हितैक-कामना,
मतमधिगन्तुं यस्य चाऽऽनने
छदम-स्मितिः सदैव राजते॥

**प्रत्याशी मतमेष याचते॥३॥**



तृतीये परिच्छेदे विंशतिः कवितानां गीतानां च संकलनं वर्त्तते। अत्र हास्य-व्यंग्यानां नितराम् अभावः। अस्मिन् परिच्छेदे प्रदत्ता अनेकाः कविताः प्रायश आकाशवाणी द्वारा प्रसारिताः संस्कृत-पत्र-पत्रिकासु च यथाऽवसरं प्रकाशिता अपि वर्त्तन्ते। एतासु कवितासु राष्ट्रस्य महिमा, एकता, जीवन-सौन्दर्यस्य चर्चा, प्रार्थना, सात्त्विकता च निरूपिता!

अत्रैव कानिचित्तथाविधानि गीतान्यपि वर्त्तन्ते यानि प्रायः संस्कृतस्य छात्रैश्छात्राभिश्च प्राचीन-चलचित्र-गीतध्वनिपुरःसरं गातुं शक्यन्ते तद्यथा— 'याच्ञा' इति शीर्षक गीतं 'सावन का महीना पवन करे शोर' इति लयमाश्रित्य, 'मालिन्यं चित्तवृत्तेः' इति शीर्षकं गीतं - 'यूं ही कोई मिल गया था सरे राह चलते चलते' इति रागानुसारम्, 'भारत महिमा' इति शीर्षकं गीतं 'फिरकीवाली तू कल फिर आना' इति रागाऽनुसारम् 'शरणं देहि' इति शीर्षकात्मकं गीतम् 'मेरे मन की गंगा और और तेरे मन की जमुना का . . .' इति लयानुसारम्, 'भारतवीरगाथा' इति शीर्षकं गीतम् 'ढूंढ़ो ढूंढ़ो रे साजना' इति रागानुसरम् महर्षिस्वामिदयानन्दमधिकृत्य प्रणीतं 'महर्षि-महिमा' इति शीर्षकं गीतं 'तेरी प्यारी प्यारी सूरत पे किसी की नजर' इति रागानुसारम् अथ च 'अनुपेक्षणीयः काल' इति शीर्षकात्मकं गीतं च 'पाकीजा' इत्याख्यस्य चलचित्रस्य 'इन्हीं लोगों ने ले लीना' इति गीतस्य रागानुसारं संगीतपूर्वकं गातुं शक्यते। तदेदानि गीतानि विद्यालयीय-संस्कृत-छात्राणां कृते बहूपयोगीनि भवन्ति॥

 

# पर्यावरण-सुरक्षणम्

मानवाः साम्प्रतं स्वीयकृत्यैः कथम्
शोषणं प्रकृतेः प्रत्यहं कुर्वते?।
शत्रुता या प्रकृत्या समं वर्धिता
तेन तस्याऽपि सत्ता बभूवाऽस्थिरा।।

काननानां विनाशः समासादितः
पर्वता वृक्षहीनास्तथा निर्मिताः।
प्रस्तराणां कृते पर्वता नाशिताः
प्राणिनो जंगलस्थाः समुन्मूलिताः।।

सागरा दूषिता येन मत्स्या मृताः
निम्नगानां जलं केन वा दूषितम्?।
साम्प्रतं पुण्यतोयं तथा सौख्यदम्
दुःखमेतद् हि गाङ्गं जलं दूषितम्।।

कार्यशाला-समुत्सारिता या घना
धूमरेखा विषाक्ता नभो व्याप्नुते।
तस्य यः कुप्रभावस्तु जीवेषु स्यात्
कस्य दोषो भवेदत्र कैश्चिन्त्यते?।।

अद्य प्रौद्योगिकी संस्कृतिर्भीषणा
दूषितं वातवृत्तं विनिर्माति यत्।
तेन स्वास्थ्यं सदा मानवानां हतम्
स्वास्थ्यदं वायुवृत्तं तथा दुर्लभम्।।

मानवः स्वार्थसिद्धिं सदा चिन्तयन्
प्रकृतिं नाशयन् विकृतिं वर्धयन्।
केवलं लाभमिच्छन् स तात्कालिकम्
भाविनीं सन्ततिं संशयेऽमज्जयत्।।

**(स्रग्विणी वृत्तानि)**

हरीतिमा या विटपेषु राजिता
प्रदूषणैः साऽपि तु कालिमां गता,
विलोक्य नग्नान् अथ पर्वतांस्तथा
प्रपीड़ितं स्याद् हृदयं मनीषिणाम्।।

बमादिशस्त्राऽस्त्रपरीक्षणैः स्वयम्
विषाक्तवातावरणं नरैः कृतम्।
न चेह पर्यावरणे पवित्रता
न प्रकृतौ सन्तुलनं च दृश्यते।।

क्वचित् समुद्रे खनिजाततैलकैः
समुद्रपानीयमपि प्रदूषितम्।
तथैव नानानगरेषु दूषितं
जलं नदीनामपवित्रताकरम्।।

क्व काननानामधुनाऽस्ति सान्द्रता?

क्व पर्वतानां वद साऽस्ति रम्यता? ।
क्व चाऽस्ति वातावरणे पवित्रता?
क्व चाऽस्ति पानीयकणेष्वरोगता?।।

सदा सुरक्षा कुरुते हि प्राणिनाम्
सुपूजितेयं प्रकृतिः सुरक्षिता ।
परन्तु लोकैः प्रकृतिस्तिरस्कृता
निहन्ति लोकं बहुधा सुनिश्चितम्।।

सदैव पर्यावरणस्य रक्षणम्
समग्रलोकस्य हिताय वै वरम् ।
परस्परं भद्रमनन्तमिच्छता
जनेन रक्षा प्रकृतेः सदा कृता।।

(वंशस्थवृत्तानि)



# एकताबद्धं भारतम्

विलोक्य लोके बहुधा विभिन्नताम्,
दरिद्रतां हिंस्रस्वभावतां पराम् ।
विचार्यते किं भुवि साम्प्रतं सखे!
पवित्रता मानवता दिवंगता ?॥

न चाऽस्त्रमेवान्तिममस्ति साधनम्,
न हिंसनं चान्तिममस्ति मार्गणम् ।
किमग्निरस्मिन् भुवि शम्यते क्वचित्,
घृतस्य धाराभिरहो समेधितः?॥

प्रवाहयन्त्येव कथं जनाः पुनः,
नदीमिमे रक्तविनिर्मिताम्पराम् ।
कथं च ते भ्रातर एव साम्प्रतम्,
परस्परं शाश्वतशत्रुतां गताः॥

महर्षिभिर्यस्तु सदाऽभिनन्दितः,
महात्मबुद्धेन सदैव वन्दितः ।
गतः क्व पन्था गुरुनानकेन यः,
प्रदर्शितः स्नेहमयः शुभंकरः॥

 

विभिन्नधर्मेष्वपि निन्दितं सदा,
विभिन्नपान्थैरपि गर्हितं सदा।
यदत्र हत्या क्रियते ह्यनागसाम्
यथा त्वनाथैश्च शिशुभिश्च रुद्यते।।

न मानवास्ते हृदयं न चाऽगमत्,
दयार्द्रतां तद्विधवाऽश्रुजालकैः।
न जीवितास्ते न हि दुःखितं मनः,
बहूनि श्रुत्वा शिशुरोदनानि च।।

गृहाणि शून्यानि च रिक्तभाजनम्,
विदीर्णवासांसि विवर्णमाननम्।
क्षतानि गात्राण्यथ खिन्नमानसम्,
विलोक्य केषां हृदयं न दूयते?।।

अहो! कथं जीवति रावणोऽधुना,
हतोऽपि रामेण पुरेति चाद्भुतम्।
कथं च गाण्डीवधनुर्धरोऽधुना,
विमूढतायां रमते मुहुर्मुहुः।।

न जीवनं तस्य च जीवनं मतम्,
य एक एव श्वसिति स्वयं कृते।
परोपकाराय न यः प्रयत्नवान्
अमुष्य श्वासोऽपि यथा हि भस्त्रिका।।

अभूत् स्वदेशस्य सदा परम्परा,
दयालुता किं च परार्थवृत्तिता।
परन्तु कैश्चिद् यदि तद्विरुध्यते
हृणीयते तेन तु भारतीयता।।

कथं जनैस्त्याग-परार्थभावना,
न साम्प्रतं संस्रियते स्वजीवने?
दयामहिंसां त्वधिगम्य मानवाः
सदा समाजेऽधिगताः प्रशस्यताम्।।

महर्षिभिश्चाऽथ वरेण्यमानवैः,
तपस्विभिः सज्जनसंचयैस्तथा।
यशःपताका भुवि भारतस्य या,
न्यधायि सेयं गगने विधूयताम्।।

सदैव सत्याचरणैः सुवृत्तिभिः,
परोपकारैः सदयानुभूतिभिः।
सदुःखसुखानुभवैश्च मानवैः
द्विषां मनो जेतुमपीह शक्यते।।

पवित्रमध्यात्मधराधिसंगतम्,
सदा नवोत्थानकरं शिवप्रदम्।
प्रवर्त्तते दर्शनमत्र सर्वथा
हिताय लोकस्य च भारतस्य नः।।

**(वंशस्थवृत्तानि)**

बहुजन हितकारी यो विधिर्जीवने नः,
भय-दुरित-विनाशी स्नेहसौहार्दधारी।
प्रसरतु सततं स श्रेयसे लोकचित्ते
भवतु भवतु भूयो भारतं चैक्यबद्धम्।।

**(मालिनीवृत्तम्)**



# सार्थकं जीवनम्

तज्जीवनं न रुचिरं न तदर्थपूर्णं,
लोकोपकारचरिते न विभूषितं यत्।
श्रद्धा दया सरलता ममता न यत्र,
तच्छुष्कपादप इवाऽस्त्यफलं जगत्याम्॥

बाला रुदन्ति यदि भोज्यपदार्थहीनाः,
कष्टायिताश्च विधवा विलपन्ति यद् वा।
क्रन्दन्ति वा विगलिताङ्गनरा जगत्यां,
पूजा तदा भगवतो विहिता कुतस्ते?॥

सांहारिकैर्बहुविधैर्बहुधास्त्रजालैः,
विस्फोटयन्ति भवनानि विनाशयन्ति।
सञ्चूर्णयन्ति सहसा क्वचिदप्यकस्मात्,
यानानि यात्रिभिरहो परिपूरितानि॥

ते पामरा हि कथिताः कथमीशभक्ताः,
अज्ञाश्च ते वद कथं ननु देशभक्ताः?।
व्यापादयन्ति यदि चेह निरीहलोकं,
प्राप्स्यन्ति नैव नरकेऽपि गतिं ततस्ते॥

विद्याविलासविभवाः पुरुषाः प्रशस्याः,
अज्ञानता-तिमिर-राशिमपाकिरन्तः।
सज्ज्ञान-भास्कर-गभस्तिभिरत्र विश्वं,
धन्याः सदैव बहुशः परिपूरयन्तः।।

येषां हि वाचि मधुरत्वविशेषराशिः,
देदीप्यते च करुणा हृदये विशाले।
नेत्रेषु तिष्ठति दयोदधि-वीचि-माला
धन्यं सदैव ननु जीवनमस्ति तेषाम्।।

येषां हृदि व्यवसितं हितमेव कार्यम्,
ये शिक्षयन्ति धृति-सत्य-परोपकारम्।
लोकाय ये ददति शास्त्रगतं च तत्त्वम्
धन्याः पवित्रहृदया विमला जनास्ते।।

यैः सेवितास्तु पितरो भुवि शीर्णगात्राः,
तीर्थाटनं यदि कृतं नहि तैस्तदा किम्?
रागादिना न च मनांसि विदूषितानि,
गंगानिमज्जनमहो! यदि नो कृतं किम्?।।

दृष्ट्वा बुभुक्षितजनं गृहवेदिकायां,
दत्त्वा त्वखिन्नमनसा निजभोजनांशम्।
यैस्तर्पितो भुवि दरिद्रजनस्तदानीं
किं मन्दिरे भगवते वद भोगकार्यम्?।।

सत्पूर्वजैर्निंदगदितं बहुधा श्रुतं यत्
लोके सदैव 'दशपुत्रसमो द्रुमः' स्यात्।
किन्त्वद्य प्रकृतिविनाशपरा विमूढाः
आत्मानमेव हि मुधा किल नाशयन्ति।।

आरोपसेचनक्रियाभिरनेकहस्तैः
यैः प्रकृतं प्रकृतिचित्रमिदं समृद्धम् ।
तैर्मन्दिरे प्रतिनिविश्य यदा कदापि
अर्घ्यादिकं यदि कृतं यदि नो कृतं किम् ? ।।

आनन्दयन्ति मदयन्ति विवर्धयन्ति ।
विस्तारयन्ति रचयन्ति सुखानुभूतिम् ।
सद्भद्रभावभरिता मनसो विचाराः
सन्तोषयन्ति गमयन्ति च सार्थकत्वम् ।।

(वसन्ततिलकावृत्तानि)



# किं किं भवति

ब्रह्मचारिणां श्रृङ्गारः
विद्यावताम् अहङ्कारः,
वानप्रस्थिनां विकारः
उपदेशकानाम् असत्कारः ।
**निन्दनीयो भवति।।**

रागहीनानाम् आलापः
विधवानां विलापः,
रोगिणां सन्तापः
दुष्टानां प्रतापः ।
**दुःखदायको भवति।।**

शिशूनां हासः
चन्द्रमसो भासः,
भामिनीनां विलासः
वत्सरस्य मधुमासः ।
**प्रीतिकारको भवति।।**

दुर्जनानां प्रसन्नता
महात्मनां विपन्नता,
विरक्तानां सम्पन्नता
शिक्षकाणां खिन्नता ।
**चिन्तनीया भवति।।**

 

गुरुजनेषु भक्तिः

प्रबलेषु शक्तिः,

अधर्मेषु विरक्तिः

संस्कृते अनुरक्तिः ।

**श्लाघनीया भवति॥**

गवां संवर्धनम्

मयूराणां नर्त्तनम्,

प्रणवस्य कीर्त्तनम्

धर्मस्य प्रवर्त्तनम् ।

**चित्ताह्लादकं भवति॥**

वेदानां सन्देशः

आचार्याणाम् आदेशः.

सज्जनानां वेशः

मुनीनाम् उपदेशः ।

**वरणीयो भवति॥**

आर्यसमाजस्य प्रचारः

संन्यासिनां विचारः ।

रोगिणाम् उपचारः

गृहस्थानां सदाचारः

**प्रशंसनीयो भवति॥**



# भारतं भासताम्

साम्प्रतं मानवः क्रूरकर्मा कथम्
मानवं हन्ति नित्यं वृथा निर्दयः,
कष्टसन्तापमग्नः कथं कञ्जनः
नैव गेहेऽपि सन्तिष्ठते निर्भयः॥

बालकाः पितृहीना अनाथाः कथम्?
मातुरङ्के निलीना भयोद्वेजिताः।
क्रीडने चाऽपि निःशङ्कभावेन ते,
तत्परा नैव त्रस्तास्तथा कुण्ठिताः॥

मानवै रुंध्यते दानवैर्हस्यते
भौतिकी मानलिप्सा वृथा वर्धते।
दुःखदारिद्र्यपङ्के निमग्नं जनम्
वीक्ष्य चित्तं भवेत् कस्य नो पीडितम्?॥

अत्र देशे सदा बुद्धगांधीनिभा
लब्धवन्तो जनिं ये महामनवाः,
ब्रूहि तेषां किमात्मा न कष्टं व्रजेत्
निर्दयं चित्तमलोक्य हिंसारतम्॥

क्वाधुना वेदवाणी गता पावनी?



क्वाधुना सत्यघोषः अहिंसाध्वनिः?

क्वास्ति बुद्धोपदेशो दयाप्लावितः

गांधिनः क्वोपदेशः अहिंसापरः?॥

जीवितं सार्थकं तस्य सत्प्राणिनः

यः परेषां कृते मृत्युमाश्लिष्टवान्,

यः समाजस्य राष्ट्रस्य वा सर्जने

आत्मसर्वस्वमेवाऽत्र विसृष्टवान्॥

राष्ट्रमस्माकमेतत् सदा वर्धताम्,

भारतं भासतां भारतं राजताम्।

अस्मदीयं प्रभो ! जीवनं सर्वदा

राष्ट्ररक्षाकृते वर्त्ततां वर्धताम्॥

(स्रग्विणीवृत्तानि)



# अस्थिरं नो पदं स्यात्

अभिनवमुखहास्यं सुन्दराणां शिशूनाम्,
जनयति हृदि शान्तिं प्रायशो मानवानाम्।
उदरमिह परं तद् रिक्तमालोक्य तेषाम्
भवति बहुविषादो मानसे नैव केषाम्?।।

प्रविशति पतिगेहे सुन्दरी कोमलाङ्गी,
यति विभवविहीना सद्गुणा सद्वधूटी।
परिमिह धन-लुब्धैः पीड्यते यौतकार्थम्,
अहह! भवति पीडा मर्मसंघातिनी सा।।

अयि! विटप! फलं ते प्रत्यहं भुञ्जते ये,
कुसुममपि सपत्रं गृह्णते ये चिलुञ्च्य।
पुनरपि ददसे त्वं शकुलाऽऽसज्जनार्थम्,
समिधमिह सहर्षं तत्कृतघ्नेभ्य एव।।

मिहिर! तव मयूखा भेदभावं विनाऽपि,
प्रतिगृहमिह भूमौ सर्वथा निष्पतन्ति।
वयमपि तु समानाः स्याम नित्यं कथं न?
यदि मनुजसमाजे भेदभावः परास्तः।।

मलयज! तव शैत्यं नैव कञ्चिन्मदीये,

शिरसि हरति पीडां दुःखदारिद्र्यजन्याम्।
अनशनमिह कृत्वा निर्धना ये तु सुप्ताः,
दिवि दिवि तदु दृष्ट्वा मस्तकं पीडितं नः।।

कमल! तव परागे षट्पदा गन्धलुब्धाः,
निशि निशि मदमत्ताः शेरते कोशबद्धाः।
मम हृदि बहु कष्टं विद्यते यद् द्विरेफान्,
अवसि न हि शरण्यान् त्वं कथं वारणेभ्यः?।।

शशधर! किरणास्ते नैव शान्तिं कथञ्चित्,
प्रददति भुवि दृष्ट्वा सञ्चये लोभमग्नान्।
अहरहरतिमात्रं भोग्य-वस्तु-प्रसारे,
अभिनवधनिकांस्तान् दुर्मदान् सत्त्वहीनान्।।

गिरिवर! गरिमा ते साम्प्रतं नैव मन्ये,
भवतु जगति पूर्वं ते गुरुत्वं कदाचित्।
जरसि तु पितरो ये पालनीया इदानीम्,
अहह! नवयुवभ्यस्ते महाभारभूताः।।

अतुलितजलराशौ ये हठात् सम्प्रविष्टाः,
जलनिधि-तलभूमिं मर्दयन्ते वगाह्य।
परमिह भुवि कष्टं यत् खलानां त एव,
मनसि निहितभावं नाऽवगन्तुं समर्थाः।।

पथि पथि यदि तीक्ष्णाः साम्प्रतं सन्ति शूलाः,
रहसि च रिपवस्त्वां सर्वदा भीषयन्ते।
पुनरपि गमनं ते सत्यमार्गेषु बन्धो!
कथमपि च पदं स्यादस्थिरं नो जगत्याम्।।

(मालिनीवृत्तानि)



# सुरभारती विजयताम्

विजयतां सुरभारती — सा गौरवं भारत धरायाः।
भासताम् अतिकाशतां — या हर्षदा सचराचरायाः।।
**विजयतां सुरभारती....**

राष्ट्रमाबध्नाति भाषा-कलह-कालमपास्य चैषा।
व्यास-भास-विभूषिता कविकालिदास-विलासिता या।।
**विजयतां सुरभारती....**

पञ्चशील-सुशान्ति-युक्ता धर्म-धाम-धुरन्धरा या।
भद्र-भाव-प्रवाह-पूर्णा सत्य-सलिला निम्नगा या।।
**विजयतां सुरभारती....**

विविध-विद्या-विनय-दात्री शक्ति-भक्ति-धृति-प्रदात्री।
वेद-शास्त्र-पुराण-नाना-विध – रहस्य-समाश्रिता या।।
**विजयतां सुरभारती....**

गीयताम् अभिधीयतां संस्कृतगिरैव विहस्यतां च,
हे मनुष्याः! विबुध-भाषा सर्वदैव सुषेवनीया।।
**विजयतां सुरभारती....**



# याच्ञा

चेतसि वेदज्योति र्ज्वालय हे प्रभो!,
**शरणं त्वं हि मदीयं मह्यं ज्ञानं देहि विभो!।।**
पश्य भुवनमेतत् तमोभिरशेषम्,
पूर्णं भवति न तु प्रभवति नेत्रम् ।

जगति ज्ञानज्योति र्ज्वालय हे गुरो!
**शरणं त्वं हि मदीयं मह्यं ज्ञानं देहि विभो!।।**
देव त्वमसि यदि विश्वविधाता,
याच्ञा मदीया भव बुद्धिप्रदाता ।

मनुजो बुहिहीनः प्रयाति कुगतौ,
**शरणं त्वं हि मदीयं मह्यं ज्ञानं देहि विभो!।।**
शील-सुजनतादि-गुण-समुपेता,
लोके भवतु जनता बहुवित्ता ।

मनसा वचसा कृत्या पूतो भवानि भो!
**शरणं त्वं हि मदीयं मह्यं ज्ञानं देहि विभो!।।**



# महर्षि-महिमा

तव कीर्त्ति–कौमुदीयं भुवने सर्वत्र सदा तनुते।
**हे महर्षे!।।**

त्वं वेदार्थ-प्रकाशयिता सत्यार्थं विस्तारयिता,
तव सत्यार्थ-प्रकाशो ग्रन्थो ज्ञानद्वारमुद्घाटयिता।
जनता कल्याणपथे याती जयशब्दं ते कुरुते।।
**हे महर्षे!।।**

वैदिकधर्मं ख्यापयता शास्त्रार्थं सञ्चारयता,
प्रतिमापूजा वेदविरुद्धा घोषः सम्प्रति कृतस्त्वया।
पाखण्ड-खण्डिनी ध्वजा सदा गगने कथमुड्डयते।।
**हे महर्षे!।।**

भारतवर्षमिदं गुरुणा बोधपथेन विहारयता,
पठितव्या प्रत्येकजनेन संस्कृतवागिति ख्यापयता।
आर्याणाम् एष समाजस्त्वां बहुवारं स्मरयते।।
**हे महर्षे!।।**



# भारत-महिमा

भारतदेशो विभूषितवेशो विशेषविलासस् त्रिभुवने विराजते।

**मम देशो वेदवाणीं प्रकाशते।।**

भवनेषु धूमः शुभगन्धयुतोऽयं — व्याप्नुते हवनाश्रितो,

विद्यापिपासु-ब्रह्मचारिगणोऽयं — राजते च कुले गुरोः।

आम्रनिकुञ्जे ३, आम्रनिकुञ्जे कोकिलकूजो गुञ्जति वारंवारम्,

पश्य शोभा कथं रमणीया सदा वरणीया।

**— वसन्त समागमे।।**

**मम देशो वेदवाणीं प्रकाशते।।**

बहवो बभूवुरिह क्षत्रियावीरा — धार्मिका जनपालकाः

श्री कृष्णचन्द्रं रामभद्रं राघवं — को न बोधति धन्विनम्।

महाभारते ३, महाभारते युद्धे भीमार्जुनयोर्विक्रम चरितम्,

वीरभूमे! नमो मातृभूमे! धान्यधन पूर्णे!।

**— सदा शस्यश्यामले!।।**

**मम देशो वेदवाणीं प्रकाशते।।**

चरणानि यस्य सततं क्षालयते — दक्षिणादिशि सागरो,

शैलाधिराजो रमते चोत्तरस्यां — देवतात्म-हिमालयो।

गङ्गातीरे ३, गङ्गातीरे निर्मलनीरे नृत्यति नौकायानम्,

शीतवातोऽरविन्द-सुगन्धं प्रसारयतेऽयम्।

**— विशाल-सरोवरे।।**

**मम देशो वेदवाणीं प्रकाशते।।**



# मालिन्यं चित्तवृत्तेः

तव भक्तौ न हि मनो मे अयि देव! रमते रमते।
**अयि! देव! रमते रमते।।**

जगदीश! शुभविचारं न कदापि कुरुते कुरुते।
**न कदापि कुरुते कुरुते।।**

मोहाऽन्धकार-रिपुभिः स्खलितं मदीयनयनम्।
सत्-ज्ञान-शुभ्र ज्योति र्न कदापि लभते लभते।।
**न कदापि लभते लभते।।**
**तव भक्तौ न हि मनो मे...**

पापेषु चित्तवृत्ते र्गमनानि सन्ति बहुधा।
सन्ध्याऽग्निहोत्रकरणे चरणं न कुरुते कुरुते।।
**चरणं नो कुरुते कुरुते।।**
**तव भक्तौ न हि मनो मे...**

दुर्बोध-भय-तमांसि प्रबलानि सन्ति हृदये।
स्वाध्याय-योगवृत्तेर्न बलानि सहते सहते।।
**न बलानि सहते सहते।।**
**तव भक्तौ न हि मनो मे...**



# शरणं देहि

याचेऽहं न तु राज्यं हे भगवन्! शरणं याचे ते।
देहि मह्यं देहि शीघ्रं शरणं हे विभो!।।
**अरे! देहि मह्यं देहि . . . . . .**

ईश! अहो! लोकस्य विधातः! त्वं वरणीयो जनताभिः,
यस्योपरि ते कृपाकटाक्षो धन्योऽसौ पुरुषो भवति।
सकलं दुःखं जीवलोकतो हरणीयं प्रभो!
देहि मह्यं देहि शीघ्रं शरणं हे विभो!।।
**अरे! देहि मह्यं देहि . . . . . .**

जगदाधार! त्वमेवैकाकी लोक-नियन्ता सुखरूपो,
भद्रभावना मुक्तिकामना मम चित्ते सञ्चरतु गुरो!।
सकलो लोको त्वामाश्रयते सदा दीनबन्धो!
देहि मह्यं देहि शीघ्रं शरणं हे विभो!।।
**अरे! देहि मध्यं देहि . . . . . . .**

नष्टा सर्वा भवतु तमिस्रा दुर्भाग्यं यदिदं प्रथते,
ज्ञान-प्रकाशो वेदनिधीनां लोके स्यादिति कामयते।
चरणाऽऽवरणं ते वरणीयं सदा दयासिन्धो!।
देहि मह्यं देहि शीघ्रं शरणं हे विभो!।।
**अरे! देहि मह्यं देहि . . . . . . .**



# भारतवीरगाथा

गेहे गेहे रे! गीयताम् गेहे रे! गीयताम्।
**महावीर-नरगाथा....**
इह देशे बभूव धनुर्धारी — आर्य देशे बभूव धनुर्धारी,
दृश्यते च वैभवं — यस्य संयुगे कथम्।
**रामचन्द्रो दशाननहन्ता रे!।।**
**गेहे गेहे रे! गीयताम्. ..**
मम देशे बभूव गदाधारी — आर्यदेशे बभूव गदाधारी,
दुष्ट–शत्रुनाशनं — येन सर्वदा कृतम्।
**भीमसेनः सुयोधनहन्ता रे!।।**
**गेहे गेहे रे! गीयताम् ...**
इह देशे त्यागिनो राजानो — मम देशे त्यागिनो राजानः,
स्वाभिमान-रक्षणं —येन सर्वदा कृतम्।
प्रणवीरः प्रतापी राणा रे!।।
**गेहे गेहे रे! गीयताम्. ..**
मम देशे धर्मरक्षा विहिता — आर्य देशे वेदसंस्कृतिरुच्चा,
यावनोन्मूलको — वेदधर्मरक्षिता।
**छत्रपोऽयं शिवाजी राजा रे!।।**
**गेहे गेहे रे! गीयताम्. ..**



# माहात्म्यं देववाचः

सखे! श्रृणु देवभारती ज्ञानं वितरति विविधं विविध रे!
**वितरति विविधं विविधं रे!।।**

भारतीय संस्कृतिरेषा संसारे बहुविख्याता,
वेदपुराण – धर्मग्रन्था अस्यामेवोपन्यस्ताः।
मुनिना वाल्मीकिनाऽपि रामायणमत्रैव लिख्यते रे!।।
**सखे! श्रृणु देवभारती ज्ञानं......**

महाभारते संकटकाले पार्थे मोहापन्ने
श्रीकृष्णेन भगवता यस्यामुपदिष्टा शुभगीता।
रुचिरं कालिदास-शाकुन्तलमिह मे चेतो हरते रे!।।
**सखे! श्रृणु देवभारती ज्ञानं......**

देवानामेषा वाणी भवबन्धन - दुःखविहन्त्री,
ब्रह्मानन्द - बोधयित्री सर्वेभ्यो मुक्तिप्रदात्री।
त्वमतःपठ संस्कृतवाङ्मयं श्रद्धया दिवसे दिवसे रे!।।
**सखे! श्रृणु देवभारती ज्ञानं......**



# अनुपेक्षणीयः कालः

**काले व्यतीते - काले व्यतीते - काले व्यतीते।**
**काले व्यतीते सन्तापस्तवाऽयं व्यर्थम्।।**
दिवसे निशायां न च कदाप्यधीतम्।
अधुना परीक्षाकृत-शोकस्तवायं व्यर्थम्।।

**काले व्यतीते सन्तापस्तवायं व्यर्थम्।।**

विहितं सुकार्यं कथमपि त्वया नो।
समये जराया धर्मचिन्ता तवेयं व्यर्थम्।।

**काले व्यतीते सन्तापस्तवायं व्यर्थम्।।**

हृदये वितेने भगवतो न ध्यानम्।
विभवेषु लिप्सा यदि जीवस्तवायं व्यर्थम्।।

**काले व्यतीते सन्तापस्तवायं व्यर्थम्।।**



# इयं मातृभूमिः

सदा सागरैः क्षालिताः पूतपादाः,
किरीटे हिमाच्छादिताः शैलमालाः ।
क्वचित् केरले नारिकेलस्य वृक्षाः,
तटे सागरस्यासते पंक्तिबद्धाः ।।

सुगन्धाभिभूतान्यहो ! चन्दनानाम्,
लसन्तीह कर्नाटके काननानि ।
क्वचित् चित्रकूटं क्वचिद् विन्ध्यमाला,
सुरम्याऽस्ति कश्मीरभूमिर्विशाला ।।

इहाऽभूत्पुरा वेदशास्त्रप्रकाशः,
पुराणेतिहासै स्तदर्थोपबृंहः ।
इहाध्यात्मभावस्तथा यज्ञयोगौ,
उपक्रामितो दर्शनानां विचारः ।।

इहैवापि काव्यं च वाल्मीकिनोक्तं,
महाभारतं दृश्यते व्यासकृत्यम् ।
इहैवास्ति भासस्तथा कालिदासः,
सुलालित्य-गन्धर्वविद्याविलासः ।।

इयं रामचन्द्रस्य भूमिः प्रशान्ता,

तथा कृष्णचन्द्रस्य पुण्या धरित्री।
पवित्रास्ति काशी पवित्रा त्वयोध्या,
वहत्यत्र गंगानदी पुण्यतोया।।

प्रयागे तथा संगमोऽयं नदीनाम्,
सदा मानसं नः पुनीते समेषाम्।
इहैवाऽभवद् बुद्धदेवो महात्मा,
अहिंसा-दया-जीवकारुण्यधर्मा।।

तितिक्षाप्रसारे सततस्तापसोऽत्र,
महावीरतीर्थङ्करो जन्म लेभे।
सदा शात्रवेष्वप्यहो ! वैरहीनः,
अहिंसा-प्रवीणो महात्माऽत्र गांधी।।

सतामेष देशो मुनीनां धरित्री,
कवीन्द्रस्य चेयं रवीन्द्रस्य भूमिः।
इयं ज्ञानभूमिः सुसाहित्यभूमिः,
जयेत् सर्वदा पुण्यदा कर्मभूमिः।।

(भुजङ्गप्रयात-वृत्तानि)



# युवा वसन्तः

शीतं विनाशितमतः शिशिरो व्यतीतः
कोष्णं दिनं सुखमपूर्वमहो ददाति।
दीनास्तु वस्त्ररहिता मनुजा हसन्तः
सम्मानयन्ति यदिहारभते वसन्तः।।

कूहू-निनादमतिरम्यमनेकवारम्
शाखास्थिताः परभृताः परिपूरयन्तः
सानन्दमत्र विपिने विपिने भ्रमन्तः
उद्घोषयन्ति यदिहाऽऽक्रमते वसन्तः।।

शीतं जलं बहुविधं बहुरागयुक्तम्
सोल्लासमेव वसनेषु परिक्षिपन्तः।
अन्योन्यमेव सहसा बहु हासयन्तः
संद्योतयन्ति यदिहाऽऽक्रमते वसन्तः।।

क्षेत्रेषु पक्वमतिनूतनमन्नवृन्दम्
हृष्टः प्रफुल्लितमनाः कृषकः प्रशस्तः।
होलोत्सवेषु विदधन् बहुसस्ययागम्
हृष्टोऽनुपश्यति समर्धयते वसन्तः।।

नव्यानि वस्तरुषु पत्रकदम्बकानि
दैनन्दिनं रुचिरतां परिवर्धयन्ति ।
क्षुद्रम्फलं मधुर-मञ्जुल-मञ्जरीषु
संयोज्य भाति तदिहाम्रतरौ वसन्तः।।

अस्वस्थताम् अलसताम् अपकर्षतां च
स्वान्ते विनेशयति चाऽन्यमनस्कतां च ।
कन्दर्प-दर्प-दलिते मदिरेक्षणानाम्
देहे समाविशति पश्य युवा वसन्तः।।

(वसन्ततिलकावृत्तानि)



# धातुर्विचित्रा गतिः

आकाशे क्वचिदुन्नताः प्रतिदिनं गर्जन्ति घोरा घनाः
नद्यः कूप-तडाग-गर्त्तनिवहा आप्लाविता वारिभिः।
किन्त्वत्रैव जना न बिन्दुमपि ये पातुं लभन्ते जलम्
शुष्कां वीक्ष्य धरां भवन्ति विकला **धातुर्विचित्रा गतिः॥१॥**

सन्तप्तो रविदीप्तिभिः प्रतिहतो ग्रीष्मे पिपासाकुलः
पारावारमनन्तमच्छसलिलं दृष्ट्वा प्रमोदं ययौ।
जिह्वाग्रेण परं तदैव सहसा स्पृष्ट्वा जलं दुःखितः
किंकर्त्तव्यविमूढधीः पिबतु किं **धातुर्विचित्रा गतिः॥२॥**

ये मूर्खा इह तत्त्वबोधरहिता विद्याविहीनास्तथा
ते लक्ष्मीपतयोऽभवन् बहुविधं सौख्यं समासाद्य वै।
विद्वांसो बहवो महामतियुता दारिद्र्ययुक्ताः परम्
दुःखार्त्ता यदि ते भवन्ति भुवि सा **धातुर्विचित्रा गतिः॥३॥**

श्रीमन्तो बहवो धनं निजमहो संगोप्य रक्षन्ति ये
कार्पण्येन न ते व्ययं किमपि तत्कुर्वन्ति सत्कर्मणि।
किन्त्वस्मिन् भुवि निर्धनास्तु बहवः सम्प्रेरिताः श्रद्धया
धर्मार्थे व्ययमाचरन्ति बहुधा **धातुर्विचित्रा गतिः॥४॥**

शुद्धाचार-पराङ्मुखाः सुजनता-सत्त्वादिभिर्वञ्चिताः
नाना वार्हितकर्मणि प्रतिहिताः सत्तां समापुर्जनाः।
ये वै सात्त्विकवृत्तिभिः परिगताः शुद्धा वरेण्या जनाः
ते सत्ताभिरपाकृता अहह! सा **धातुर्विचित्रा गतिः॥५॥**



# अरण्यरोदनम्

केवलम् एकैव सीता
लङ्कापतिना छद्मरूपमाधाय हृता,
परन्तु साम्प्रतम् –
सततमपह्रियन्ते शतं सीताः
अनवरतम्प्रताड्यन्ते रावणाद् भीताः
अपि! दशरथनन्दन! रामभ्रद!
अपि! रामचरितलेखनप्रवीण! हे आदिकवे!
कथयस्व माम्
त्वं कुत्र सुप्तवान्?॥१॥

एकस्यां राजसभायां
राजपत्नी द्रौपदी महान्तमपमानं प्राप्तवती
निर्वसना भवन्ती बहुशो रुदितवती,
किन्तु साम्प्रतम् –
द्रोपद्यो बहुशो बाष्पिताऽऽननाः
दुःशासनेन कृता निर्वसनाः
अनवरतं क्रन्दन्ति भारते
ब्रूहि कृष्ण! कृष्णद्वैपायन!!
कुत्र स्वपिषि विस्मृत्य भारतम्?॥२॥

 

केवलमेकस्यैव क्रौञ्चस्य वधं विलोक्य

वाल्मीकेर्गिरा सहसा मुखरीभूता
किन्तु साम्प्रतम् –
शतक्रौञ्चानां वधं विलोक्याऽपि
न मम नेत्राभ्यामश्रूणि निपतन्ति
तेषां मृतशरीराणि निरीक्ष्याऽपि
न दीर्यते धरित्री
न रोदिति नभोमण्डलम्
न निःश्वसिति समुद्रः
अपि मम छन्दांसि
यूयं क्व विलीनानि?
यूयं क्व निपतितानि?॥३॥





इत्येवं श्रीप्रशस्येन मित्रेण शास्त्रिणा कृतम् ।
नर्मणाऽऽख्यमिदं काव्यं परिच्छेदत्रयात्मकम् ।।
नानाविधैर्विसंवादैश्चिन्तनैश्चाऽपि चित्रितम् ।
समाप्तिमगमद् बन्धो! मनोरञ्जनराजितम् ।।

